श्रीमते रामानुजाय नमः ।

# उपोद्घातः ।



'वैकुण्ठे तु परे लोके श्रीसहायो जनार्दनः ।
उभाभ्यां भूमिनीलाभ्यां सेवितः परमेश्वरः ॥' इति,
'वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः ।
आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैस्सह ॥' इति,

'अत्यर्कानलदीप्तं तत्स्थानम् ।' इति चोक्तप्रकारेण परमपदे उभयविभूतिसूचकविभागविशिष्टश्रीदिव्यसिंहासने श्रीभूमिनीलाभिः सहोभयविभूतिनिर्वाहकस्सन्विराजमानः 'स्वेतरसमस्तवस्तुविलक्षणज्ञानानन्दैकस्वरूपः' इत्युक्तप्रकारेण स्वयमपि निरतिशयानन्दयुक्तो विस्मृतिशून्यामराः "तद्विप्रासो विपन्यवः–साध्यास्सन्ति देवाः" इति च स्थितानन्तगरुडविष्वक्सेनादीन्नित्यसूरीन् निवृत्तसंसारान्नित्यवल्लब्धकैङ्कर्यांश्च मुक्तानपि 'एष ह्येवानन्दयाति–रसो वै सः–रसꣳह्येवायं लब्ध्वानन्दी भवति' इति चानन्दयन्नेत इव संसारिणोऽपि मामनुभूयानुभवजनितप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यनिरवद्यानिरतिशयानन्दरूपमत्कैङ्कर्यभूतां महतीं संपदं प्राप्योज्जीवितुं योग्यतायां सत्यामपि अनेन कैङ्कर्येण हीना हाहेति परमपदस्थानुभवानपि कणेहत्य 'स एकाकी न रमेत' इत्यतिखिन्नः एतेषां करणकलेवरविधुरतां छिन्नपक्षपक्षिवत्स्थितिं चावलोक्य 'करणकलेवरैर्घटयितुं दयमानमनाः' इति परमदयालुः सकलात्मनां करणकलेवराण्यन्वग्रहीत् । एते च पुनः समिदाहरणार्थं दत्तच्छुरिकया गोपुच्छच्छेत्तार इव यवसो-

नदीतरणाय दत्तनावा
म्मूलनाय दत्तदण्डेन नक्रक्षोभका इव च 'विचित्रा देहसंपत्तिरी-
प्रवाहमार्गेण समुद्रं प्रविशन्त इव च 'विचित्रा देहसंपत्तिरी-
श्वराय निवेदितुम्। पूर्वमेव कृता ब्रह्मन्हस्तपादादिसंयुता ॥' इति
स्वचरणकमलपरिचरणोपयुक्ततया दत्ते करचरणादिसंघाते शरी-
रेहंबुभ्या तच्चरणकमलपरिचर्यामकृत्वा शब्दादिविषयप्रवणास्त-
त्संपादनोपायान्वर्णाश्रमाचारनाशकानन्वसेवन्त। तदनु 'शासना-
च्छास्त्रम्- हर्तुं तमस्सदसती च विविक्तुमीशो मानं प्रदीपमिव कारु-
णिको ददाति।' इति चोक्तरीत्या चेतनानां विशिष्टवेषविषयं
शास्त्रं प्रकटयामास। तच्छास्त्राभ्यासस्यानेकयोग्यतासापेक्षत्वात्,
चिरकालसाध्यत्वाच्च दुष्करत्वं ज्ञात्वा तादृशयोग्यतानिरपेक्षतादि-
ना सुकरचेतननिष्कृष्टवेषविषयां श्रीमदष्टाक्षरब्रह्मविद्यां स्वयमे-
वाविश्चकार। तदुक्तं नानुष्ठाय 'योऽन्यथा सन्तमात्मानमन्यथा
प्रतिपद्यते। किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥' इत्युक्त-
विधयाऽखिलपापहेतुं स्वातन्त्र्यरूपमात्मापहारं विधाय सर्वसमर्थ-
मत्यनादिकर्मवासनादूषितांश्चेतनानपश्यत्। ततश्चाज्ञाभञ्जकान्स्वय-
मेव सेनया गत्वा दुष्टतां निवर्तयद्राजान इव सर्वेश्वर एतान्समूहीकृत्य
गृहीत्वागमिष्यामीति रामकृष्णादिरूपेणावतीर्य 'मर्यादानां च
लोकस्य कर्ता कारयिता च सः। यदि ह्यहं न वर्तेयं जातु कर्म-
ण्यतन्द्रितः। सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥' इति
चोक्तमर्यादया शास्त्रीयमर्यादान्स्वयमनुष्ठाय पराननुष्ठाप्यासह्यदुः-
खान्यनुभूय सुमीचिकीर्षयमिति 'आसुरीं योनिमापन्ना मूढा
जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥'
इत्यासुरप्रकृतिमापन्नाः स्वमनाश्रित्य 'ईश्वरोऽहमहं भोगी' इति विच-
याधमगतिषु पतमानान्दृष्ट्वा विजातीयस्य ममेदमसाध्यमिति मावा



मृगैर्मृगगृहीतार इव सजातीयानेवादायैतान्गृह्णीयादिति निश्चित्य
नित्याननन्तगरुडविष्वक्सेनादीन्मानुषरूपेण भुव्यवतारयाज्ञापया-
मास। ततश्च ते 'कलौ खलु भविष्यन्ति नारायणपरायणाः।
कृतादिषु नरा राजन्कलाविच्छन्ति संभवम्, क्वचित्क्वचिन्महाभाग
द्राविडेषु च भूरिशः। ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी।
कावेरी च महाभागा प्रतीची च महानदी। ये पिबन्ति जलं
तासां मनुजा मनुजाधिप। प्रायो भक्ता भविष्यन्ति वासुदेवप्र-
लाशयाः ॥' इत्युक्तया दाक्षिणात्येष्वेव देशेषु तासां नदीनां तटव-
र्तिष्ववतेरुः। तेषु श्रीसेनेशः सूत्रवतीसखो विष्वक्सेन आदिमाया-
नद्यास्ताम्रपर्ण्यास्तीरे श्रीआदिनाथभगवदधिष्ठितश्रीकुरुकापुर्यां
श्रीकारीति प्रसिद्धस्य राज्ञः श्रीउडैयनंगैयादेव्यां पुत्रत्वेनाविर्बभूव।
अस्य चावतारश्लोकः श्रीदिव्यसूरिचरिते–'श्रीविज्ञानदिनोत्तरेऽहनि
कलौ वर्षे प्रमाथ्याह्वये मासे माधवनाम्नि भार्गवदिने ऋक्षे विशा-
खाभिधे। लग्ने शुद्धचतुर्दशीतिथियुते श्रीमत्कुलीरेऽपि च क्षित्यां
प्रादुरभूत्पराङ्कुशकविर्भाग्योदयेऽस्मादृशाम् ॥' इति श्रूयते। अव-
तीर्य च स्तन्यादिमकृत्वाऽऽद्वादशाहं प्रसवगृह एव स्थितो माता-
पितृभ्यां किमिति चाकुलान्तःकरणाभ्यां स्वकुलदैवतस्य श्रीआ-
दिनाथभगवतश्चरणकमलयोर्नीत्वा तत्रैव त्यक्तस्सः स्वावतारात्पू-
र्वमेव श्रीचिञ्चातरुरूपेणावतीर्णस्यादिशेषस्य कोटरे प्रविश्या-
षोडशाब्दं मौनेन नेत्रे निमील्य भगवतस्स्वरूपरूपगुणविभूतीर्निर्हे-
तुककृपया दर्शितानन्तरेवानुभूयानुभवजनितमहाहर्षमन्येऽपि लोका
ज्ञात्वा यथोज्जीवेयुस्तथा चिन्तयामास। ततश्च तत्समीपवर्तिनि
श्रीविष्णोरष्टोत्तरशतदिव्यदेशेष्वन्यतमे श्रीनिक्षेपवित्तभगवताधि-
ष्ठिते तिरुकोळूराख्ये दिव्यदेशे। द्वापरान्तेऽवतीर्णो श्रीमधुरकवि-

नामा द्विजयोगिवर्यो दिव्यदेशानटन्नयोध्यायां श्रीरघुवरं सेवन्य-
दास्त तदा कस्यांचिद्रात्रौ दक्षिणस्यां दिशि किंचिद्दिव्यं तेजो
दृष्ट्वैवमचिन्तयत् 'अहो बत किमिदं दिव्यं तेजः किमुत्पत्तिस्थान-
मस्य कस्य वा महापुरुषस्य गत्वाहं पश्यानि' इति प्रभाते पुनस्त-
द्दिव्यतेजसो रवेः प्रकृष्टभाभिरन्तर्हिततया आरात्रि तत्रैव स्थितस्त-
द्दिव्यं तेजः पुनरप्यपश्यत्, दृष्ट्वा च तदभिमुखमाप्रभातं गच्छतिस्म
प्रतिसूर्योदयं कस्मिंश्चिद्ग्रामेऽहः क्षिप्त्वा प्रतिरात्रं दक्षिणाभिमुखो दूर-
मध्वानं गमयामास । एवं सति कस्मिंश्चिद्दिने श्रीरंगं प्राप्यात्रैवेदं
तेजः स्यादिति तर्कयामास । ततस्तद्रात्रौ ततोऽपि दक्षिणस्यां दिशि
तत्पश्यन्स्वयमपि ततः प्रचचाल । ततः श्रीकुरुकापुरीं प्राप्य तत्रत्य-
जनान् किमस्यामाश्चर्यमिति पृष्ट्वा तैश्च विदितवृत्तान्तस्तिन्त्रिणी
मूलं प्राप्य तत्र पद्मासनेनोपविष्टममाकृतदिव्यतेजस्कं भगवदनुभव-
विस्मृतस्वकरणकलेवरं योगिवर्यं श्रीशठकोपसूरिमपश्यत् । दृष्ट्वा
चैष मूको वान्धो वेति वितर्कयन्कांचित् स्थूलशर्करामादाय तत्पु-
रतो भूमौ न्यक्षिपत्, तत्पतनजरवं श्रुत्वोन्मीलितनेत्रः श्रीपराङ्कुश-
मुनिरेनं विशदमपश्यत् । तत्कटाक्षपातेन धन्यधन्यमात्मानं
मन्यमानः " गतासौ जातोऽणुः किं खादन्कुत्र तिष्ठेत् " इत्यपृ-
च्छत् । सोऽपि " तदेव खादंस्तत्रैव तिष्ठेत् " इति चोच्चारयत ।
वदर्थवदुत्तरं श्रुत्वा दण्डवत्तद्भूमौ प्रणम्य तत्पादयोः शिरः पात-
यामास । तेन च मुनिवर्येण कृपयोत्थाप्य स्वस्यान्तरंगान्तेवासी-
कृत्य भगवदनुभवजनितप्रीतिप्रकर्षामृतप्रवाहं वेदचतुष्टयं द्रमिड-
भाषात्मकप्रबन्धचतुष्टयरूपेण श्रीमुखेनाविरकारि । अलेखि च
तदाज्ञया श्रीमधुरकविसूरिणा । तत्र प्रथमप्रबन्धे ( तिरुविरुत्तं )
श्रीच्छन्दसि संसारसंबन्धनिवृत्तिरपेक्षिता । ( तिरुवाशिरियं )



श्रीअशिरियाख्ये छन्दसि निवृत्तसंसारैरनुभाव्यसौन्दर्यादीनन्वभ-
वत् । ( पेरियतिरुवन्दादौ ) बृहच्छूयन्तादौ अनुभवजनिताभि-
निवेशातिशयमकथयत् । चरमे चास्यां ( तिरुवाय्मोळि ) सहस्र-
गीतौ अभिनिवेशानुरूपं पूर्णं भगवद्विषयमनुभूय कृतार्थयति च
स्वात्मानम् । तत्र चरमप्रबन्धीभूतसामवेदीयसहस्रशाखात्मकश्रीस-
हस्रगीतौ " श्रीपतिश्चेतनस्यास्य हेतुत्वेन समाश्रितः । अनिष्टहा-
निमिष्टस्य प्राप्तिं च कुरुते स्वयम् ॥ " इति श्रियःपतिश्चेतनस्यो-
पायत्वेनाश्रितस्सन्ननिष्टनिवृत्तिमिष्टप्राप्तिं च स्वयमेव विदधाती-
त्यर्थकमहावाक्यार्थः प्रतिपाद्यते । प्रबन्धस्यास्य सर्वशास्त्रोपबृंहण-
त्वात्सकलवेदशास्त्रतात्पर्यभूतार्थपञ्चकं चैतत्प्रबन्धमहावाक्यार्थेन्त-
र्भूतम् । श्रीपतिः इति प्राप्यस्य ब्रह्मणस्स्वरूपं, चेतनस्य इति
प्रत्यगात्मनः स्वरूपं, हेतुत्वेन इत्युपायस्वरूपं, अनिष्टहानिम्
इति विरोधिनिवृत्तिः, इष्टस्य प्राप्तिम् इति प्राप्तिफलावाप्तिश्चेत्यर्थ-
पञ्चकमपि सूचितं भवति ।

अस्मिन्प्रबन्धे प्रथमचतुःशतकेन सिद्धरूपपरावरात्मयाथात्म्यं
प्रतिपाद्यते । चरमचतुःशतकेन साध्यरूपनिष्ठानिवृत्तिपूर्वकेष्टप्राप्तिः
प्रतिपाद्यते । मध्यमशतकद्वयेन सिद्धसाध्यरूपनिरपायोपायवरणं
प्रतिपाद्यते । तत्र प्रथमशतकद्वयेन प्राप्यपरस्वरूपं तृतीयचतुर्था-
भ्यां प्राप्तुः प्रत्यगात्मनः स्वरूपं, पञ्चमषष्ठाभ्यां प्राप्त्युपायस्वीकारः,
सप्तमाष्टमाभ्यां प्राप्तिविरोधिनिवृत्तिः, नवमदशमाभ्यां प्राप्तिफलं
च प्रतिपाद्यते ।

तत्र च प्रथमशतके परस्य शेषिणो रक्षकत्वं, द्वितीये भोग्यत्वं,
तृतीये भगवदेकशेषभूतस्यात्मनस्तदेकानुभवत्वं, चतुर्थे तदेकप्रिय-
त्वं, पञ्चमे निरपायोपायवेषं, षष्ठे तद्वरणप्रकारता, सप्तमे अनिष्टरूप-

विरोधिप्रकारता, अष्टमे तन्निवृत्तिप्रकारता, नवमे फलप्रकारता, दशमे तदवाप्तिप्रकारता चेत्यर्थपञ्चकस्यावान्तरार्थभेदेनास्मिन्प्रबन्धे दशार्थाः प्रतिपाद्यन्ते ॥ अनुसंधेयतया शिष्टाचारप्रबन्धस्यास्यानुसंधानादावनुमतौ श्रीभट्टनाथसूरिश्रीमधुरकविसूरिभ्यां विरचितौ ( तिरुपल्लाण्डु ) श्रीवहुशरदः, ( कण्णिनुण्शिरुत्तांबु ) ग्रन्थिमत्सूक्ष्महस्वरज्जूश्चेति द्वावपि प्रबन्धौ पुरतो निविष्टौ सहस्रगीतेरादौ कवितार्किकसिंहवेदान्तदेशिद्रविडोपनिषत्संगतेरुपोद्घातश्लोकाः पुनश्च प्रतिदशकरचितद्रविडोपनिषत्तात्पर्यरत्नावलेरुपोद्घातश्लोकाः द्रविडोपनिषत्तात्पर्यरत्नावकस्यान्ते द्रमिडोपनिषत्संगतिश्लोकाः अपि च ( तिरुप्पावै ) श्रीव्रतं रामानुजलिश्लोकाश्च निविष्टा वर्तन्ते नूत्तन्दादिकारिकाश्च सहस्रगीत्यनन्तरं निविष्टाविति ज्ञेयम् ॥

गुणदोषाविति न्यायेनाभिज्ञाः परं कण्ठ इत्यकृत्वा पुनरावृत्तिसंस्करणोपद्युक्तनया प्रकटीकुर्युरिति सविनयमभ्यर्थये ।

विदुषामनुचरः

श्रीनिवासरामानुजदासः,

श्रीवेङ्कटेश्वराय नमः ।

श्रीमते रामानुजाय नमः ॥



# तिरुप्पल्लाण्डु ।

## ( श्रीवहुशरदः )

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ॥ यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥ १ ॥ रम्यजामातृयोगीन्द्रपादरेखामयं सदा ॥ तदायत्तात्मसत्तादिं रामानुजमुनिं भजे ॥ २ ॥ लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् । अस्मदाचार्य्यपर्य्यन्तां वन्दे गुरुपरम्पराम् ॥ ३ ॥ यो नित्यमच्युतपदांबुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने । अस्मद्गुरोर्भगवतोस्य दयैकसिन्धो रामानुजस्य चरणौ शरणं प्रपद्ये ॥ ४ ॥ मातापितायुवतयस्तनया विभूतिः सर्वं यदेव नियमेन मदन्वयानाम् । आद्यस्य नः कुलपतेर्वकुलाभिरामं श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना ॥५॥ भूतं सरस्यमहदाह्वयभट्टनाथश्रीभक्तिसारकुलशेखरयोगिवाहान् ॥ भक्तांघ्रिरेणुपरकालयतीन्द्रमिश्राञ्छ्रीमत्परांकुशमुनिं प्रणतोस्मि नित्यम् ॥६॥

गुरुमुखमनधीत्य प्राह वेदानशेषान्नरपतिपरिक्लृप्तं शुल्कमादातुकामः ॥ श्वशुरममरवन्द्यं रङ्गनाथस्य साक्षाद्द्विजकुलतिलकं तं विष्णुचित्तं नमामि ॥ १ ॥

श्रीपूर्णातिविशालमालविलसच्छ्रीधन्विपूर्वपुरीत्येवं संवदतां सकृत्पदसरोजातं समुन्नंसितम् ॥ पूर्वं शुल्कधनस्य हारक इति प्रोक्तं च नीचैर्गतैः पन्थाः सोऽपि विनाशितः प्रियतमः स्वान्तानुकूल्यान्नव ॥ १ ॥ पांड्ये स्तोत्रकरे समागत इति श्रीभट्टनाथो महानाध्मातेषु समस्तशंखनिवहेष्वद्भुत्य विद्वद्वरैः ॥ पारम्यैकपरान्विशेषनिगमान्तुचार्य्य विष्णोर्द्रुतं छेत्तः शुल्कधनस्य पादकमलंशरण्यं सदा नः परम् ॥ २ ॥

बहुशरदो बहुशरदो बहुसहस्रशरदः । बहुकोटिशतसहस्राणि । मल्लनियन्तृदृढभुजमणिवर्ण । तवर्जुचरणकान्तेः श्रीरक्षा ॥ १ ॥ दासानामस्माकं तव च विश्लेषमन्तरा सहस्रं बहुशरदः । रूपभूता तव दक्षिणवक्षसि वर्द्धमाना युवतिश्च बहुशरदः । रूपपूर्णज्योतिर्दक्षिणे नित्यं वसत्तेजश्चक्रं च बहुशरदः । सेनायुद्धे प्रविश्य घोषयत्तत्पाञ्चजन्यं च बहुशरदः ॥ २ ॥ वृद्धये दास्यं लब्ध्वा तिष्ठन्तः स्थ यदि आगत्य मृदं कल्याणं च स्वीकुरुत । अन्नाय दास्यं लब्ध्वा स्थितानामस्माकं गोष्ठ्यां प्रवेशं न संमन्यामहे ।



सप्तपुरुषकालं निन्दाशून्या वयम् । राक्षसाभिवृद्धिस्थानलंकायाः शून्यपुरुषभावाय युद्धं कृतवतो बहुशरदो वदामः ॥ ३ ॥ वस्तुभूमौ स्थापनात्पूर्वमागत्यास्मत्संघे प्रविश्य । सङ्गन्तुं मनोवन्तो मर्य्यादां विहायाऽऽगत्य शीघ्रं संगच्छध्वम् । देशस्य नगरस्य च सम्यक् प्रकाशो यथा स्यात्तथा नमो नारायणायेति । गातुं मनोवन्तो भक्ताः स्थिता आगत्य बहुशरदो वदत ॥ ४ ॥ अण्डकुलस्याधिपतिर्भूत्वाऽसुरराक्षसान् । चण्डालकुलमुद्धृत्यापाकृतवतो हृषीकेशस्य । भक्तकुले विद्यमानाः आगत्य चरणौ प्रणम्य सहस्रनामान्युक्त्वा । प्राचीनकुलं विहाय बहुशरदो बहुसहस्रशरदोवदत ॥ ॥ ५ ॥ मत्पितृपितृपितृपितृस्वपूर्वपितृसप्तपुरुषकालमारभ्य । आगत्य मार्गेण मार्गेण दास्यं कुर्मः श्रीश्रवणश्रीमदुत्सवे । सन्ध्यासमये हरिरूपो भूत्वाऽरिं नाशितवतः । भयनिवृत्तिर्यथा स्यात्तथा बहुशरदो बहुसहस्रशरद इति गायामः ॥ ६ ॥ अग्न्यधिकरक्तप्रभवर्तुलकान्तिश्रीचक्र—मन्दिरचिह्नेन चिह्निताः स्थित्वा कुलतः कुलतो दास्यं कुर्मः । मायायुद्धबलबाणस्य सहस्रभुजेभ्य आसाररुधिरप्रसारो यथा स्यात्तथा । अमितसुदर्शनसमर्थस्य बहुशरदो वदामः ॥ ॥ ७ ॥ घृतमध्यसमीचीनैकोदनं च नियतं च सन्नि-

कुष्टदास्यं च । करताम्बूलं च कण्ठस्याभरणेन सह कर्णस्य कुण्डलं च देहे धारणाय समीचीनैकचन्दनं च दत्त्वा मामवदातप्राणं कर्तुं समर्थस्य । फणवन्नागशत्रुध्वजस्य बहुशरदो गायामि ॥ ८ ॥ धृत्वाऽपनीतं तव पीताम्बरं परिधाय पात्रेऽवशिष्टं भुक्त्वा । ग्रथिततुलसीपुष्पाणि धृत्वाऽपनीतानि दधाना एते दासा वयम् । प्रेरितदिक्कर्म निर्वर्त्य श्रीश्रवणश्रीमदुत्सवे शयितफणावन्नागशयने शयितवते बहुशरदो वदामः ॥ ॥ ९ ॥ यस्मिन्काले स्वामिंस्तव दासा इति लेखं प्राप्ताः स्मास्मिन्काले एव । दासा वयं पादकुटीरेण सह मोक्षं प्राप्योज्जीवनं प्राप्ता भोः । ऋजुकाल आविर्भूय श्रीमधुरायां चापं नमयित्वा । पञ्चशिरसः फणावन्नागस्य शिरसि निपतितन् । तव बहुशरदो वदामः ॥ ॥ १० ॥ अन्यायेनैकेनापि शून्याभरणगोष्ठीपुरवासिनां स्वाम्यभिमानतुङ्गः । शेल्व इव श्रीपतेऽहमपि तव प्राचीनदासः । समीचीनप्रकारेण नमो नारायणायेति नामानि बहूनि प्रलप्य । नानाप्रकारैरपि पवित्र तव बहुशरदो वदामि ॥ ११ ॥ बहुशरदमिति पवित्रं परमेष्ठिनं शार्ङ्गाभिख्यं धनुर्नियमयन्तम् । विल्लिपुत्तूर्विष्णुचित्तेन बहुशरद इत्यादरेणोक्तम् । समीचीनशरदित्यभ्यस्य वदन्तो नमो नारायणायेति । बहुशरदः परमात्मानं परितः स्थित्वास्तु पूर्वबहुशरद एव ॥ १२ ॥

श्रीमते रामानुजाय नमः ।

# कण्णिनुण्शिरुत्तांबु ।

## ( ग्रन्थिमत्सूक्ष्मह्रस्वरज्जुः )

---

अविदितविषयान्तरश्शठारेरुपनिषदामुपगानमात्रभोगः ।
अपि च गुणवशात्तदेकशेषी मधुरकविर्हृदये ममाविरस्तु ॥ १ ॥

अन्यत्किंचिन्न जानामि वेदं द्रमिडीकृतमारः शठकोप उदारकुरुकापुर्यधिपतिरस्मज्जीवनमिति स्तुवन्मधुरकविरस्मत्पाता स एव रक्षकः ॥ २ ॥

ग्रन्थिमत्सूक्ष्मह्रस्वरज्ज्वा बन्धनयोग्यं कृतवतो महामायिनो मत्पितुरुपगम्य सुन्दरकुरुकापुरीपूर्ण इत्युक्तौ मधुरीभवत्यमृतं स्रवति मद्रसनाया एव ॥ ॥ १ ॥ रसनयोक्त्वाऽऽनन्दं प्राप्तवान्, आदृतवांस्तस्य स्वर्णचरणं याथार्थ्यमेव देवमन्यं न जानामि कुरुकापुरीपूर्णच्छन्दोमधुररागं गीत्वा संचरामि ॥ २ ॥ निवृत्यापि देवोपकारकस्य नीलसुन्दरश्रीरूपं पश्येयं महामहोदारकुरुकापुरीनगरपूर्णस्य दासोऽनुरूपो भूत्वा दासेन मया प्राप्तं सामीचीन्यम् ॥ ३ ॥ समीचीनेनाधिकाश्चतुर्वेदविदो नीचतया गणयेयुरेवंभूतत्वात् माता भूत्वा पिता भूत्वा मन्नियमनस्वभाववान् शठकोपो मम पूर्ण एव ॥ ४ ॥ अभिलषितवानन्यसमीचीनद्रव्यमभिलषितवान्योषितश्च पूर्वं सर्वदा

रक्तस्वर्णगृहश्रीकुरुकापुरीपूर्णस्य प्रीतिमान्भूत्वा सोहं चतुरो जातोऽद्यैव ॥ ५ ॥ अद्यारभ्य सप्तपुरुषपर्यन्तमस्मत्स्वामी स्थित्वा स्वकीर्तिस्तोत्रकरणाय कृपां कृतवान् पर्वतगृहश्रीकुरुकापुरीपूर्णः सर्वदा मां न त्यजेत्पश्यत ॥ ६ ॥ पश्यन्सन्मां कारिमार उपकारकः प्राचीनप्रबलपापं विनाश्यान्वगृह्णात् अष्टौ दिशश्च यथा जानीयुस्तथा वदामि उज्ज्वलद्रामिडशठकोपकृपामेव ॥ ७ ॥ कृपां श्लाघमाना दासा यथाऽऽनन्दं प्राप्नुयुस्तथाऽन्वगृह्णात् तद्दुर्लभवेदार्थं कृपां स्वीकृत्य सहस्रं मधुरद्राविडान्यगायत्कृपा पश्यतास्मिँल्लोकेधिका ॥ ८ ॥ श्रेष्ठवेदिनां वेदस्यान्तःपदार्थं सुस्थिरं गीत्वा मम मनसि स्थापितवान् उचितगुणस्य शठकोपस्य मम पूर्णस्य दास्ये प्रवेशकृदाशा दास्यफलं तदेव ॥ ९ ॥ फलाभावेप्यौचित्यशून्या अपि व्यापारेण सम्यञ्चो यथा भवेयुस्तथा विशोध्य दास्यं स्वीकुर्यात्कोकिला स्थित्वा यत्र कोलाहलं कुर्वन्ति तादृशोद्यानपरिवृतकुरुकापुरीपूर्णाध्यवस्यामि तव निबिडचरणयोरभिनिवेशमेव ॥ १० ॥ भक्तस्य स्वमाश्रितानां सर्वेषां स्नेहवतः दक्षिणकुरुकापुरीनगरपूर्णस्य स्नेहवता मधुरकविनोक्ते वाक्ये विश्वासवतां स्थानं वैकुण्ठं पश्यत ॥ ११ ॥

## अथ श्रीसुन्दरजामातृमुनिकृतद्रमिडोपनिषत्संगतेरुपोद्घातः ।



यश्चकार सकलार्थसम्पदां व्यंजनीं द्रमिडवेदसंगतिम् ।
तं द्वितीयशठकोपमन्वहं स्तौमि सुंदरवराह्वयं मुनिम् ॥ १ ॥
आचार्योदितपद्धत्या द्रामिडाम्नायसंगतिम् ।
अभिधास्ये विशेषज्ञैरादराद्गृह्यतामिह ॥ १ ॥

श्रीमान्गुणाम्बुधिरवाप्तसमस्तकामः
शौरिश्शठारिमनुजन्मपरिभ्रमन्तम् ।
आकस्मिकेक्षणवशादातनिस्युमुक्तं
बृन्दातृणीकरणशक्तिधरश्चकार ॥ १ ॥
आद्ये वयस्यपि ततोऽनुभवन्मुरारि-
मस्तन्यपानरसिकश्शठजिन्मुनीन्द्रः ।
आस्थाय मौनमवधीर्य च लोकवृत्त-
माषोडशाब्दमतिवाहितवान्दिनानि ॥ २ ॥
ये राघवे भरतलक्ष्मणजानकीनां
ये घोषमुग्धसुदृशामपि नन्दसूनौ ।
भावा रसैकवपुषः प्रथिताश्शठारि-
स्तानेव वा तदधिकानुत तत्र लेभे ॥ ३ ॥
प्रह्लादनारदमुखप्रभवा च भक्तिः
स्नेहस्तथा दशरथार्जुनबान्धवोत्थः ॥
सर्वे च ते शठजितः पुरुषे परस्मि-
न्नानन्दने पदजुषामतिमात्रमासन् ॥ ४ ॥

इत्थं हरेरनुभवामृतवारिराशि-
रन्तर्मुनेः शठरिपोरमितश्शरीरे ।
सूक्त्या बहिः परिवहन्सुतरां जगन्ति
सद्यः सिषेच घनसंसरणानलानि ॥ ५ ॥

मातापितृप्रभृतितोऽपि च वत्सलत्वा-
त्सर्वोपकारचपलाच्छठजिन्मुनीन्द्रात् ॥
वेदश्चतुर्विधतया विदितस्स साक्षा-
दाविर्बभूव हि निबन्धचतुष्टयात्मा ॥ ६ ॥

शब्दस्य संस्कृततया यदि गौरवं स्या-
द्द्रौढ्यादिशास्त्रवचसामपि तत्प्रसंगः ।
वाच्येन चेत्कथितमुत्तमवाच्यमेषु
भाषानिकर्ष इह तेन न शक्यशंकः ॥ ७ ॥

पुस्त्वं निशम्य पुरुषोत्तमताविशिष्टे
स्त्रीप्रायभावकथनाज्जगतोऽखिलस्य ॥
पुंसां च रंजकवपुर्गुणवत्तयापि
शौरेश्शठारियमिनोऽजनि कामिनीत्वम् ॥ ८ ॥

या प्रीतिरस्ति विषयेष्वविवेकभाजां
सैवाच्युते भवति भक्तिपदाभिधेया ।
भक्तिस्तु काम इह तत्कमनीयरूपे
तस्मान्मुनेरजनि कामुकवाक्यभङ्गी ॥ ९ ॥

यश्चैतमेव विशदानुभवः परस्मि-
न्नाथेष एष गुणरत्नमहाम्बुराशौ ।
विच्छित्तिरस्य विरहस्त्विह याङ्गसंगा-
लाभव्यथा विरचिता मुनिपुंगवस्य ॥ १० ॥

तत्रार्थपञ्चकशमं प्रथमे प्रबन्धे
शौरेर्गुणं शठजिदन्वभवद्द्वितीये ।
तृष्णामवर्द्धयत भोक्तुमिमं तृतीये
यावन्मनोरथमलब्धफलं चतुर्थे ॥ ११ ॥

कैंकर्यमस्य नियमावधि वैर्युपाय-
तत्स्वीक्रियाविषयबाधनिरासने च ।
शीलं हरेरधिगताधिगमं शठारि-
स्तुर्यप्रबन्धशतकैर्दशभिर्जगाद ॥ १२ ॥



---

## अथ श्रीवेदांतदेशिककृतद्रमिडोपनिषत्ता-
## त्पर्यरत्नावलेरुपोद्घातः ।



सारस्सारस्वतानां शठरिपुभणितिश्शातिशुद्धान्तसीमा
मायामायामिनीभिः स्वगुणविततिभिर्बन्धयन्ती धयन्तीम् ।
पारं पारंपरीतो भवजलधिभवन्मज्जनानां जनानां
प्रत्यक्प्रत्यक्षयेन्नः प्रतिनियतरमासंनिधानं निधानम् ॥ १ ॥

प्रज्ञारूपे मंथशैले प्रथितगुणरुचिं नेत्रयन्सम्प्रदायं
तत्तल्लब्धिप्रसक्तैरनुपधि विबुधैरर्थितो वेंकटेशः ।
तल्पं कल्पान्तयूनः शठजिदुपनिषद्दुग्धसिन्धुं विमथ्न-
न्ग्रथ्नाति स्वादुगाथालहरि दशशतीनिर्गतं रत्नजातम् ॥ २ ॥

पांचालीगात्रशोभाहृतहृदयवधूवर्गपुंभावनीत्या
पत्यौ पद्मासहाये प्रणयिनि भजतः प्रेयसीपारतन्त्र्यम् ।
भक्तिश्शृंगारवृत्त्या परिणमति मुनेर्भावबन्धप्रथिम्ना
योगाद्यायुक्तभावस्थितिरिह विरहो देशिकास्तत्र दूताः ॥ ३ ॥

भाषागीतिः प्रशस्ता भगवति वचनात्राजवच्चोपचारा-
त्सा चागस्त्यप्रसूता त्विति परिजगृहे भूमिकाभेदयोग्या ।

यत्तत्कृत्यं श्रुतीनां मुनिगणविहितैस्सेतिहासैः पुराणै-
स्तत्रासौ सत्त्वसीम्नः शठमथनमुनेस्संहिता सार्वभौमी ॥ ४ ॥
आदौ शारीरकार्थक्रममिह विशदं विंशतिर्वक्ति साग्रा
संक्षेपोऽसौ विभागं प्रथयति च ऋचां चारुपाठोपपन्नम् ॥
सम्यग्गीतानुबद्धं सकलमनुगतं सामशाखासहस्रं
संलक्ष्यं साभिधेयैर्यजुरपि दशकैर्भात्यथर्वा रसैश्च ॥ ५ ॥
प्राच्ये सेव्यानुगुण्यात्प्रभुमिह शतकेऽमंस्त मुक्तेरुपायं
मुक्तप्राप्यं द्वितीये मुनिरनुबुबुधे भोग्यता विस्तरेण ।
प्राप्यत्वोपायभावौ शुभसुभगतनोरित्यवादीत्तृतीये-
ऽनन्यप्राप्यश्चतुर्थे समभवदितरैरप्यनन्याद्युपायः ॥ ६ ॥
देवः श्रीमान्स्वसिद्धेः करणमिति वदन्नेकमर्थं सहस्रे
सेव्यत्वादीन्दशार्थान्पृथगिह शतकैर्वक्ति तत्स्थापनार्थान् ।
एकैकस्यात्परत्वादिषु दशकगुणेष्वायतन्ते तथा ते
तत्तद्गाथागुणानामनुविदधति तत्पङ्क्तयः पङ्क्तिसंख्याः ॥ ७ ॥
सम्यक्त्वाद्भोग्यभावाच्छुभतनुविभवात्सर्वभोग्याधिकत्वा-
च्छेषत्वद्धेतुदानाच्छ्रितविवशतया स्वाश्रितानिष्टहृत्त्वात् ।
भक्तच्छन्दानुवृत्तेर्निरुपधिकसुहृद्भावतस्सत्पदव्यां
साहाय्याच्च स्वसिद्धेः स्वयमिह करणं श्रीधरः प्रत्यपादि ॥ ८ ॥
इति गाथासहस्रं मुरमथनगुणस्तोमगर्भं मुनीन्द्रः
प्रत्येकं चात्र गाथाः प्रथितविभुगुणाः स्पष्टमध्यक्षयामः ।
तत्रासङ्कीर्णतत्तद्दशकगुणशतस्थापनौचित्ययुक्ता-
न्नैदंपर्यावरुद्धानगणितगुणितांस्तद्गुणानुद्गृणीमः ॥ ९ ॥
इच्छासारथ्यसत्यापितगुणकमलाकान्तगीतान्तसिद्ध्य-
च्छेदान्ताचार्यशुद्धैरियमनघगुणग्रन्थिबन्धानुबद्धा ।
तस्मादत्ताम्रपर्णीतटगतशठजिद्दृष्टसर्वार्थशाखा-
गाथातात्पर्यरत्नावलिरखिलभयोत्सारिणी धारणीया ॥ १० ॥

इत्युपोद्घातः ।

श्रीमते रामानुजाय नमः ।

भक्तामृतं विश्वजनानुमोदनं सर्वार्थदं श्रीशठकोपवाङ्मयम् ।
सहस्रशाखोपनिषत्समागमं नमाम्यहं द्राविडवेदसागरम् ॥ १ ॥
श्रीपाण्ड्यदेशवर इति श्रेष्ठा कुरुकेति ताम्रपर्णीति । श्रुति-
मन्तादिं वदतश्चिन्तय चेतः सदाङ्घ्रियुगममलम् ॥ २ ॥ मनसा
वाचा दक्षिणकुरुकापुरिवर्गतः परं न भजे । पूर्णोऽस्मि सर्ववि-
त्तैस्तातशठारेः पदे हि मः प्राप्ये ॥ ३ ॥ वन्दे महित-
यशोभररामानुजरम्यपादपाथोजम् । विमलमहागुणशठजि-
त्सौम्यद्रमिडश्रुतिज्ञसुहृद्हृदे ॥ ४ ॥ व्यामनभोवनसालश्रीरं-
गपतेरुदारगुणविषये । द्राविडवेदसहस्रं प्रसूश्शठारिर्यतीश्वरो
धात्री ॥ ५ ॥ अतिशय ईश्वररूपं ह्यनादिचिद्रूपमुचितमयनं च ।
प्रतिबन्धिगणं प्राप्यं वीणास्वर आह शठजितो वेदः ॥ ६ ॥

---

वाधूलवंशकलशाम्बुधिपूर्णचन्द्रं
श्रीश्रीनिवासगुरुवर्यपदाब्जभृङ्गम् ।
श्रीवाससूरितनयं विनयोज्ज्वलं तं
श्रीरंगदेशिकमहं शरणं प्रपद्ये ॥

श्रीमते रामानुजाय नमः ।

# श्रीसहस्रगीतिः ।

( तिरुवाय्मोळि )

प्रथमशतके प्रथममुच्छ्रायशून्यं दशकम् ।

उच्छ्रायशून्यमुच्छ्रयदानन्दवान्यः सोऽज्ञाननिवृत्ति मत्यानन्दं दत्तवान् यः स विस्मृतिशून्यामराधिपतिर्यस्तस्य दुःखनिवर्त्तकतेजश्चरणावाश्रित्य वर्द्धस्व मन्मनः । १ । १ । १ । मनोन्तरमलेषु नश्यत्सु विकस्वरोपर्युपरिजृंभमाणमनोज्ञानपरिच्छेदरहितेन्द्रियज्ञानतद्रहितः इत्थंभूतज्ञानकृत्स्नानन्दो भविष्यद्वर्त्तमानभूतकालेषु सदृशरहितो मदात्माधिकंशून्यः । १ । १ । २ । रहितस्तेन युक्तोनेनेति ज्ञातुमशक्यो भूतल आकाशे रूपवत्वानरूपवानिन्द्रियैः सहेंद्रियाग्राह्योऽविच्छिन्नततस्तदानन्दिनमेकमाश्रिता वयमेव ।१।१।३। वयं सोयमन्यः सेयमन्याका पूज्यः सोयमन्यस्तदिदमन्यत्किं नश्वरं तदिदमन्यत्किं गुणो दोषो भविष्यद्भूतं भूत्वा स्थितः सः । १ । १ । ४ । तेते स्वस्वज्ञानप्रकारैस्तेते स्वामिनः इति चरणौ समाश्रयन्ते तेते स्वामिनो न्यूनतारहिताः स्वामी तेते विधिमार्गेण यथा प्राप्तु-



युस्तथा स्थितः ।१।१।५। तिष्ठन्त आसीनाः शयानाः संचरंत अतिष्ठन्त अनासीना अशयाना असंचरंतश्च ये तत्सर्वं सदैकस्वभाववानिति ज्ञातुमशक्यः सदैकस्वभावतया स्थितोऽस्माकं दृढः । १ । १ । ६ । दृढ आकाशोऽग्निर्वायुर्जलं पृथिवी एतदुपरि समवेतपदार्थाः सर्वे भूत्वा तेषुतेषु शरीर आत्मवत्सूक्ष्मीभूय सर्वत्र व्याप्य स्थितस्तेजोधिकश्रुतावेतदत्ता सुर एव । १ । १ । ७ । सुरज्ञानाऽविषयस्थित्याकाशादिसर्ववरकारणं तत्सर्वादः परपरः पुराण्यद्वितीयानि त्रीणि दग्ध्वाऽमरेभ्यो ज्ञानं दत्त्वा हरोऽज इति लोकान् संहृत्य सुष्ठ्वा वर्त्तते । १ । १ । ८ । अस्तीति वादे अस्ति तद्रूपाण्येतद्रूपवंति सन्नेतिवादे तद्रूपमेतद्रूपरहितानि अस्तीति नास्तीत्येतद्गुणसंबंधेस्त्युभयात्मनाऽविच्छिन्नव्यापकः । १ । १ । ९ । व्यापकशीतलसमुद्रांतर्जलेषु व्याप्य वर्त्तते विस्तृतांड इव भूमावंतरिक्षोविच्छेदमन्तरा सूक्ष्मसूक्ष्मस्थानेषु स्थानेषु प्रकाशमानवस्तुषु सूक्ष्मीभूय सर्वत्र व्याप्यास्त्येतदत्ता दृढः । १ । १ । १० । दृढ आकाशोऽग्निर्वायुर्जलं पृथिवी एतदुपरि वरशब्दसामर्थ्यबलशैत्यं क्षमा भूत्वा स्थितस्य परस्य चरणयोः कुरुकापुरीशठकोपोक्तपूर्णपूर्णसहस्रे एतद्दशकमुत्तमम् । १ । १ । ११ । श्रीदिव्यसूरिचरणावेव शरणम् ।

### द्रमिडोपनिषत्संगतिः ।

तत्रादिमे तु शतके दशके तदाद्ये सम्यग्गुणाकृतिविभूतिसमेतमीशम् । अध्यक्षयन्परमनुग्रहतस्तदीयात्तद्दास्ययोजितमनाश्शठजिद्बभूव ॥ १ ॥

### द्रमिडोपनिषत्तात्पर्यरत्नावलिः ।

निस्सीमोद्यद्गुणत्वादमितरसतयानन्तलीलास्पदत्वा-
त्स्वायत्ताशेषसत्तास्थितियतनभिदा वैभवाद्विश्वरूप्यात् ।
ऽप्यस्त्रब्रह्मात्मभावात्सदसदवगतेः सर्वतत्त्वेषु पूर्त्तेः
पश्यन्योगी परं तत्पदकमलनतावन्वशाद्गात्मचित्तम् ॥ १ ॥

---

## द्वितीयं त्यजतसर्वं दशकम् ।

त्यजत सर्वं त्यागं कृत्वां भवदात्मवस्तु पदवते त्यागं कुरुत ॥ १ । २ । १ । विद्युत्स्थितिशून्यानि स्थिरात्मशरीराणि इत्यत्र विचारयन्तु भवन्त एव । १ । २ । २ । त्वं तवेतीमौ मूलमारभ्य विनाश्येश्वरमाश्रयतात्मन एतत्सदृशपूर्तिर्नास्ति । १ । २ । ३ । असत्सच्च न भवति तद्रूपमवधिशून्यं तदानंदं प्रविश संगं त्यक्त्वैव । १ । २ । ४ । त्यक्ते संग एव प्राप्तो मोक्षमात्मा जित्वा तं स्थिरेऽभिनिविष्टश्चेत्त्यक्त्वा स्वामिनमाश्रय । १ । २ । ५ । संगयुत ईश्वरः सर्वत्र स्थितः संगयुतः सन् तस्य सर्वत्रान्तर्भव । १ । २ । ६ । कार्त्स्न्येनोज्ज्वलांशं पदं कार्त्स्न्येन दृष्ट्वा ईशस्य



कार्त्स्न्येनातिशयस्तत्र सर्वमित्यंतर्भव मध्ये । १ । २ । ७ मनउक्तिव्यापारान्विद्यमानानेतान् त्रीन् विचार्यापोह्य स्वामिन्यंतर्भव । १ । २ । ८ । प्रवेशे तद्विषये संकोचाः सर्वे निवर्त्तेरन् पश्चाच्छरीरपातसमयं प्रतीक्षध्वम् । १ । २ । ९ । संख्याप्रवाहतत्कल्याणतेजःपदार्थनाशरहितसुन्दरगुणनारायणदृढचरणावाश्रय । १ । २ । १० । सन्निहिततटाकसुन्दरकुरुकापुरीशठकोपोक्ते शोभनसंदर्भे सहस्रे विमर्शितमेतद्दशकम् । १ । २ । ११ ।

### श्रीदिव्यसूरिचरणावेव शरणम् ।

संसारिणोप्यनुजिघृक्षुरसौ दयालुरल्पास्थिरेतरपुमर्थरुचिं निरस्यन् । तत्त्यागपूर्वहरिभक्तिसुधाम्बुधानामुद्दीपिनीमुपदिदेश मुनिर्द्वितीये ॥ २ ॥

स्वामित्वात्सुस्थिरत्वान्निखिलनिरुपधिस्वात्मविद्याश्रभावा-
त्तादृक्सर्वानुकूल्याच्च्यवनवदितरप्राप्यवैषम्यवत्त्वात् ।
सर्वत्रापक्षपाताच्छुभविभवतया मानसाद्यच्यभावा-
त्संकोचोन्मोचकत्वाज्जगदयनतयोपादिशत्सर्वयोग्यम् ॥ २ ॥

---

## तृतीयं भक्तिमतां दासानां दशकम् ।

भक्तिमतां दासानां सुलभोऽन्येषां दुरासदो विस्मयनीयः कुसुमांगनादृतोऽस्माकमशक्यो लब्धुं स्वामी मन्थानतीव्रमथनजनवनीतचौर्यबद्धस्य मध्यप्रदेशे

कीदृशमुलूखलेन सह स्थितस्य सौलभ्यम् । १ । ३ । १ । व्यवस्थानियमशून्यनानाजन्मा सौलभ्यस्वभाववान् भूत्वा प्रकाशमानसमस्तकल्याण उत्पत्तिरहितो नाश- रहितो मोक्षरूपविकाशप्रदस्वभावस्तमत्यजन् सर्वत्र स्वामी शीतलकृपयान्तरंगो बहिरंगः पूर्णः । १।३।२।परिपाकवद्धर्ममार्गैः सर्वैरनुच्छ्रायमुच्छ्रिताः परिपाकवत्सृष्टिसंहारावान्तरसंहारात्यन्तभूमयः परिपा- कवदमरा यावंति यावन्तश्च स्वयं भवत्परिपाकवन्नाराय- णस्य मायां जानंति के । १ । ३ । ३ । यावद्भिरेकस्व- भाववानिति ज्ञातुमशक्यो मत्स्वामी यावद्भिरेकस्वभाव वानिति ज्ञातुं सुलभो मत्स्वामी नामसहस्रेणा- न्यैश्च बहुभिर्युक्तो मत्स्वामी नामैकं च रूपं च सन्न भवत्यसन्न भवति विवादः । १ । ३ । ४ । विवादशा- न्त्यर्थं षड्विधानां समयानां मार्गं मार्गे स्थित्वा बहिर्मा- र्गयवसानुत्पाट्य शोषयत वासनानिवृत्ति तस्य ज्ञानमादाय विचार्योक्तवतः संख्याशून्यकल्याणवतोऽ- तेन रहितस्यादिसुंदरत्पत्त्या तस्य भगवतो नम्रता- विशिष्टतपो ज्ञात्वा । १ । ३ । ५ । ज्ञात्वा ज्ञात्वाऽधो व्याप्य पार्श्वतो व्याप्योर्द्ध्वं व्याप्य रूपाद्व्यावृत्तस्यास्य स्थितो ज्ञात्वा ज्ञात्वा ज्ञातायामपि स्वाम्यवस्थिति- र्ज्ञातुमशक्याऽऽत्मानो ज्ञात्वा ज्ञात्वोक्त्वोक्त्वा हरि-



रजो हर इत्येतान् ज्ञात्वा ज्ञात्वोक्त्वोक्त्वाश्रयत मनो- लब्धमेकम् । १ । ३ । ६ । एको नानेति ज्ञातुमशक्यासु मूर्तिषु स्थितान् समुज्ज्वलनारायणचतुर्मुखहराने- तानेकतया मनसि संस्थाप्य विचार्य भवदुभय- वासनां छित्त्वा समीचीनकल्याणं कुरुत तद्विषये अस्मत्काल एव । १ । ३ । ७ । सर्वदा स्थित्वा बाधमानान्यस्माकं प्राचीनातिक्रूरपापानि सद्य एव नश्यन्ति कापि न्यूनता नास्ति मनोन्तर्मलं सम्यक् प्रक्षाल्यसर्वदास्माकं श्रीमतः स्वामिनः कल्याणचर- णयोः प्रणामे कृते मरणदशायामपि नम्रीभावेन मरणं ज्यायः । १ ३ । ८ । दक्षिणंस्थत्रिपुरदाहकः सावकाशं नाभितले जृंभमाणदिङ्मुखसृष्टसमीचीनलोकः स्वयं चेंद्रियगोचरः पुनरपि स्वलोकावसथः स्वयमेव कथ्यमानेयं पुनरप्युदरे इदं तस्य माया । १ । ३ । ९ । संशयरहितमत्याश्रयसम्यग्ज्ञानामराणां संशयविप- र्ययकरमायासु आकाशादपि महतीषु समर्थस्य मेघ- श्यामलवर्णस्य महापृथिवीकान्तवतः समीचीनचरणकु- सुमं विस्मरणशून्य आक्रोशानि आलिङ्गानि प्रणमामि सम्यक् १ । ३ । १० । अमरेषु प्रणम्य विवृद्धेषु तरं- गितरंगितसमुद्रं मथितवंतं सन्निहितोद्यानसंपन्नकुरु- कापुरीशठकोपांतरंगकैंकर्यें पूर्णरससहस्रे तस्मिन्नेतद-

शकमधीतवन्तोऽमरैः सहोच्छ्रायं प्राप्य छिन्दति स्वजन्मकूरकाराम्। १।११।

श्रीदिव्यसूरिचरणावेव शरणम्।

दूरस्थमप्यय मुनिः कमलासहायमैच्छैस्समुद्भवशतैस्सुलभीभवन्तम्। आख्याय भक्तिमपि तत्र विधाय तस्य सेवां चकांक्ष करणत्रयतस्तृतीये ॥ ३ ॥

बंधार्हत्वात्स्वभक्तैरधिकतरगुणानन्तदिव्यावतारा-
त्सर्वेष्वासक्तिमत्वान्नतसुगमतया स्वप्रबोधप्रदत्वात्।
ख्याताभिख्यादिचिह्नात्स्वरुचिवितरणात्सर्वकालाश्रयत्वा-
च्छर्वादेः स्वांगदानात्प्रहितपदतयाऽनन्तसौलभ्यमाह ॥ ३ ॥

---

## चतुर्थं सुन्दरपक्षगुणवन्नारददशकम्।



सुन्दरपक्षगुणवन्नारदे दयायुक्ते त्वं त्वत्सुन्दरपक्षपुरुपश्च हाहेति मयि कृपां कृत्वा कूरपक्षविहंगमुच्छ्रितक्तो मन्निसृष्टदुती गच्छसि चेत् कूरकारागृहे स संस्थापयति चेदवरुद्धा भवेः किं कुर्यात्। १।४।१। मदीयरक्ताभोजनयनस्वामिनो मद्विसृष्टदूताः किंकुर्याद्वदथ चेत्संघीभूताः कोकिलाः भवंतो न भवन्तः पूर्वकृतपूर्णपापेन चरणयोरधोन्तरंगपरिचरणमग्रे कर्तुमनुद्युक्तादूरीभवामि विधिरीरितम्। १।४।२। विधिना स्त्रियो दर्पयंतो मृदुमतयो हंसाः मत्या वामनब्रह्मचारी भूत्वा लोकं याचितवतः कुहकस्य मतिशून्यायाः कूरपापमेव न नश्येदिति काचिन्मतिषु सर्वास्वन्तःक्षुभिता मुह्यतीति वदत। १।४।३। मत्स्वभावं दृष्ट्वानुकंप्येदमनुचितमित्यऽचिंतयतो मदीयकालमेघवर्णस्य किमुत्काहं वदामि समीचीनस्वभावोऽथ तस्यां न तिष्ठेदित्येकं वचः समीचीननीलक्रौंचा आद्रियन्ते नाऽद्रियन्ते वा। १। ४। ४। आहृत्य स्वयं रक्षित्वा रक्षतः सप्तलोकीमपि पापिष्ठाया आदरो न युक्तः किं नारायणं पश्यसि चेत्प्रवहज्जलसजलोद्याने भक्ष्यान्वेषणाय प्रवृत्तश्रेष्ठबालसारस प्रवहज्जलनेत्राया एकां वार्त्तां हृत्वानुगृहाण। १।४।५। अकृपाकरो भवान् कृपां कृत्वा तासां प्राणशोषणात् पूर्वमेव कृपाकूपारविहगं संचारयतु तासां वीथ्यामेकस्मिन्दिने इति कृपाकूपारस्वामिनं पश्यसि चेदेतावदुक्त्वा दयां कुरु चक्ररेख भ्रमर वयं कमपराधं कृतवत्यः १।४।६। अस्थ्याकलितसूत्रमिव शीतलमारुतो बाधते मदपराधमेव विचिन्त्य दयामऽकुर्वतः श्रीस्वामिनः कमपराधमकरोच्छ्रीस्वामिकृपाया इत्येकां वाचं वद को दोषो बालशुक मया वर्द्धितस्त्वं न भवसि। १। ४। ७। त्वं न भवसि बालशारिके दीर्घव्याऽमोहशालिनं मम दूती भूत्वा

व्यथां मम निवेदयेत्युक्ताप्यनुक्तैव स्थिता छायया सह श्लाघ्यरूपेण मोचितास्म्यहमितः परं त्वच्चंचुपुटे स्वाद्वन्नं ददत्तं मृगयस्व। १।४।८। दुर्ल्लभानि पुष्पाणि संपाद्य प्रतिदिनं नारायणस्याम्लानकुसुमचरणयोरधःसमर्पणाय सृष्टो विश्लेषमवगाह्य मूर्द्धाभिषिक्तत्वं भाग्यहीनत्वं किं कुर्यादिति मध्यमसंचरच्छीतवायो उत्काबाधस्व मच्छारीरम् । १।४।९ । शरीरचक्रजन्मपदचित एतत्त प्रभृति सर्वं भूत्वा समुद्रागाधजले आऽविर्भूय तत्र शयानं हिंसकचक्रस्वामिनं पश्यसि चेदिदमुक्ता त्यज न गम्भीरभव्यमनः पापिष्ठानामैक्यपर्यंतम् । १।४।१० । परिच्छेदातीतसप्तलोकस्थस्वामिनं कृष्णं समृद्धकेदारपरिवृतसुंदरकुरुकापुरिशठकोपेनोचितं प्रणीते परिच्छेदाऽतीतांतादिसहस्रे एतद्दशकस्य सम्यगुच्चारणेन लब्धुं शक्यमाऽकाशे उत्तुंगमहैश्वर्यम् । १।४।११।

श्रीदिव्यसूरिचरणावेव शरणम् ।

तत्कांक्षितानधिगमेन मुनिर्विषण्णः प्राप्तो दशां च हरिमुक्तविमुक्तनार्याः । सर्वापराधसहतामवबोध्य दूतैश्शौरेस्स्वदोषपरतामकुनाच्चतुर्थे ॥ ४ ॥

त्राणे बद्धध्वजत्वाच्छुभनयनतया स्वार्थलाभेऽर्थिभावा-
त्विम्यन्मेघस्वभावाज्जगदुपजननस्थापनातिप्रियत्वात् ।



कारुण्याप्तत्वयोगादनुगतमहिषीसंनिधेः संगदैर्घ्या-
न्नानाबंधैस्सुरक्षावहिततमतया क्षाम्यतीत्याह कृष्णम् ॥ ४ ॥
सभ्रीभव्यान्सुवाचस्सुचरितसुभगान्कृष्णसारूप्यसौम्या-
न्स्वाहारोदारशीलांस्तनुधृतभगवल्लक्ष्मणो बाल्यगुप्तान् ।
छात्रस्वच्छंदवृत्तीनभिगतशिशिरानंतरंगोक्तियोग्या-
नाचार्यान्कृष्णलब्धौ शरणमवृणुत प्रेयसीदूतनीत्या ॥ ५ ॥

---

# पञ्चमं माहात्म्यविशिष्टं दशकम् ।

माहात्म्यविशिष्टसप्तलोकीवीजदिविषन्नायकं क्रूरपापचौर्य्यप्रकाशं नवनीतं मुषित्वा भक्षितवान् कपट इति वदामि पुनश्च पौथिकाप्रकाशकस्मितनीलायै बलवद्गोपमुख्यो भूत्वा तरुणर्षभान्सप्त चालिंगितवान्मत्स्वामीति वदामि स्मृत्वा शिथिलः ।१।५।१। स्मृत्वाशिथिलीभूय द्रुतांतःकरणा द्रुतशरीरा भूत्वा अनिमिषा बहवो मुनयश्च ग्रथितमालाजलं चंदनं धूपेन सह धृत्वा प्रणमंति चेत्प्रतिपन्नसर्वपदार्थानां बीजभूतस्य मूलशैथिल्यमऽन्तरामाऽनसज्ञानस्य तव वै भवोमालिन्यं भजेत न किं मायिन् । १।५।२। महायोनिभूतान् गत्यऽभिज्ञान् दिवौकसो बहून्मुनींश्च त्वं योनीन् सृजेति पूर्णं चतुर्मुखमुत्पादितवान् दूरगः सर्वज्ञानानां दिशः सर्वाः श्रीचरणेन स्पृष्ट-

वान् सर्वप्राणिनां माता स्वयमद्वितीयरूपः । १ । ५ ।
३ । स्वयमेकरूपाद्वितीयहेतुर्भूत्वा स्वयमेव त्रितय-
हेतुर्भूत्वा दिवौकसो बहवो मुनयोन्यदन्यत्सर्वं च भूत्वा
स्वयमेकमहाजलं स्वस्मिन् आविर्भूय तत्र शयानो
दिविषन्नायको महामायी वैकुण्ठनाथ एवाऽस्मत्स्वामी
।१।५। ४ । हरिणीसदृशनयनभव्यश्रियं वक्षसि धृतवन्
माधव स्थगुमात्रविनाशाय गुटिका धनुरिव ऋजूकृतमृ-
जूकृतवान् गोविन्द आकाशव्याप्तकांतिमणिवर्ण
मधुसूदन त्वमनुगृहाण त्वन्मधुस्पन्दिविकस्वरश्रीपा-
दयोः प्राप्त्युपायं पापिष्ठस्य । १ । ५ । ५ । पापिष्ठस्य
मम पापनिवर्तकमौषधमसि॰ दिविषन्मुख्य केशव
सन्निहितगृहगोपकुलमूल महामायिन्माधव शाखायु-
क्तनिबिडसालवृक्षान्सप्त विद्धवानसि श्रीधरैवं भूतैवं
भूतनामवानसीति शिथिलो भवामि दासः । १
५ । ६ । दासोल्पज्ञानवान् ज्ञातुं सर्वेषां दुःशकं परि-
मलयुक्तशीतलसुन्दरतुलसीमालाधारिणं कृष्णं वन-
व्याप्तशरीरस्य दासजनसंबंधविघटकं श्रियः पतिं
दासो दिदृक्षुराक्रोशामि एतदधिकमेकमज्ञानमस्ति
किम् । १ । ५ । ७ । भक्षितवान् लोकान् सप्त पूर्व-
मेघोदीर्य मायया प्रविश्य भक्षितवान्नवनीतं क्षुद्रमनुष्य-
देहसंस्थानं प्राप्य मृदोऽवशिष्टायाः सत्त्वेपि मनु



ष्याणां भाविवैवर्ण्यस्याऽल्पस्याप्राप्त्यर्थं मृद्विनाशाय
घृतपानमौषधं किं मायिन् । १ । ५ । ८ । न नश्यामः
क्रूरबहुप्रलपनशीलातिमहापिशाचीनाशाय परिशुद्ध-
शिशुर्भूत्वा विषदुग्धममृतत्वेन पीतवंतं मायिनं दिवि-
षदद्वितीयनायकं कुसुमांगनायुवानं सर्वात्मनां मात-
रमात्मेश्वरं मत्स्वामिनं सुंदरमहामूर्तिमाश्रित्य । १ ।
४ । ९ । आश्रित्योभयविधपापानि पातयित्वा माया-
संबंधं छित्त्वा निर्वृतः स्वविषये यथा मनः स्थापये-
त्तथा शोधित्वा पदमलंकरोति पूर्णज्ञानप्रभो विस्तारेऽ-
ध उपरि च व्याप्य सूक्ष्मरूपवद्रूपं भूत्वैतदात्मा
दीर्घव्यामोहशाली । १ । ५ । १० । विभो आश्चर्यस्वामिन्
महामायिन् इतीति व्यामोहाऽऽविशिष्टस्य स्वामिकृप-
याश्रितकुरुकापुरीशठकोपस्य क्षीरसदृशद्रविडप्रबंध-
रसिकै रागिभिर्भक्तैश्चादृते सहस्रे मध्य आविर्भूतमेतद्द-
शकमध्येतुं शक्तानां नास्ति दुःखम् । १ । ५ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

स्वालिंगनादिचपले पुरुषोत्तमेपि स्वायोग्यतामभिदधद्विमुख-
श्शठारिः । त्रैविक्रमादिचरितं प्रतिबोध्य तेन नीतस्स्वशीलवश-
तामथ पंचमेऽभूत ॥ ५ ॥

क्षुद्राह्वानाभिमुख्यान्निजमहिमतिरस्कारकार्चाप्रियत्वा-
त्सर्वत्राप्यङ्घ्रिदानात्सविधशयनतस्स्वाङ्घ्रिसक्तैकरस्यात् ।
गोपाद्याश्लेषरक्षेक्षणविषयतया भक्तवस्तुप्रसक्ते-
श्श्लिष्यन्त्राशङ्क्यपोहात्तदहितशमनात्प्राह नाथं सशीलम् ॥ ६ ॥

## षष्ठं पक्षपातरहितं दशकम् ।

पक्षपातरहितमीशं गीत्वा विकासशाली सन्नद्धा वियोगप्रकारमन्तरेण शुद्धजलं समर्प्य समर्पणीयं धूपः पुष्पं च । १ । ६ । १ । मधुपूर्णशीतलसुन्दरतुलसीवतोऽनादिवेदकारणस्य किं किं मम कैंकर्यमिति अविचार्य कैंकर्यकरणमेव महिमा । १ । ६ । २ ॥ समाधिकशून्येशस्य सन्निधिं न त्यजति मन्मनो गायति मद्रसना तद्गाथां नृत्यति मदङ्गं देवाविष्टमिव । १ । ६ । ३ । देवाविष्टमिव नृत्यन्मदङ्गं नत्वाराधयति ईशो विवादं कृत्वाऽमरैः कोलाहलेनोक्तगुणसमृद्धचाश्रयः । १ । ६ । ४ । परिग्रहाऽपरिग्रहरहितो द्वेषरागशून्यः त्यागाऽत्यागाद्वहन्त्यान्तर्मिलितानामेकममृतम् । १ । ६ । ५ । अमृत ममरणां दत्तवान् विक्रमत्तेजश्चक्रो महाव्यामोहोऽमृतादप्यतिभोग्यमुत्तुंगतरंगमहासमुद्रवान् । १ । ६ । ६ । महासमुद्रपरिवृतलंकेश्वरस्य भुजानां शिरसां च छेत्तुश्चरणौ शिरसि नत्वांऽहःसमुद्रं तरंतु । १ । ६ । ७ । त्यजत मकामत्यक्ता श्रयत तस्माऽश्रयथ चेन्मार्गस्थप्रबलपापानि विनाश्याऽनपायां संपदं दद्यात् । १ । ६ । ८ । दद्यात्तद्दुर्लभफलं श्यंगनाद्वितीयवल्लभो वैभवशाली सर्वेषां त्रिविधपापानि नाशयेत् । १ । ६ । ९ ।



नाशयेत्क्रूरपापानि क्षणपूर्तिर्निःसीमान्तर्व्यंजनया हिंसकपक्षिणमुच्छ्रितवन्स्वभावपूर्णमाधव । १ । ६ । १० । माधवविषये शठकोपेन दोषरहितत्येन द्वेषरहितत्येनोक्ते दोषरहिते सहस्र एतद्दशकमध्येतुं शंका न जायते । १ । ६ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

दास्येषु देशसमयाद्यधिकारकर्तृत्वादिना न नियमः कुतो नमस्य । भक्तिः परं बहुमता तत एव सौयं स्वाराध इत्युपदिदेश मुनिस्तु षष्ठे ॥ ६ ॥

अर्चितिरर्च्यभावादनियतविविधाभ्यर्चनादल्पतुष्टेः
सद्भावस्यैव भावात्स्वविषयनियतेप्यादरात्स्वादुभूम्ना ।
पादासक्तप्रसक्तेस्सकृदुपसदने मोक्षणादप्यसीम्या-
स्थिप्रक्षिप्रादितत्वात्सुकरभजनतां माधवस्यान्वयत ॥ ७ ॥

---

## सप्तमं जन्मदुःखनिवृत्तदशकम् ।

जन्मदुःखनिवृत्तये ज्ञाने स्थित्वा निर्मुक्ततेजःप्रकाशप्रेप्सवो धार्मिकं चक्रायुधं ब्राह्मणं विस्मरणमन्तरेण मनसि स्थापयंति । १ । ७ । १ । निर्विमर्शत्यौषधं भवति दासान् क्रूरपापसमर्थेन्द्रियपञ्चकहिंसाये न प्रयच्छेत्स सर्वत्र सर्वेभ्य आनन्देनोक्तोऽदूरे सोऽस्माकं गोपकिसलयः । १ । ७ । २ । गोपकिशलयं तैस्ताड्यमानं मायिनमुपकारकं मन्माणिक्य-

ज्योतिःपरिशुद्धामृतं निपीयनिपीय मन्मायाजन्माऽज्ञानं नाशितवान् । १ । ७ । ३ । अज्ञाननिवृत्ति मन्मनसि प्रतिष्ठितमुत्कृष्टमेव ददत्तं विद्योतमानतेजःपुंजं विस्मरणशून्यामरादिपल्लवं मदनुमतिं कमुत्काहं त्यक्ष्यामि । १ । ७ । ४ । त्यक्ष्यामि किं मम दीपं मम प्राणं मध्य आगत्योज्जीवयंतं नाथं चौर्यमेव कृत्वा बालगोपीनां लोचनेषु विटमेव कृत्वा पश्यन्तं स्वामिनम् । १ । ७ । ५ । स्वामी महापृथिवीमुद्धृतवान् पुनरपि निबिडपरिमलितविकस्वरतुलस्यलंकृतशिराः सालवृक्षवेद्धा मायी मयि न तिष्ठेद्यदीतः परमहंसं मन्ये किम् । १ । ७ । ६ । अहं सम्मत्य मद्धृदये निवेशयामीति नाहमऽकार्षं स्वयं प्रतिज्ञायागत्य मदऽसहायचेतो वञ्चयित्वा शरीरावलंबिमदात्मसंश्लेषस्वभावोऽनुमन्येत किमऽथ मत्त्यागम् । १।७। ७। मां शिथलयेदपि मम समीचीनं मनः निवर्त्तयितुं स्वयमपि न शक्नुयादितः परं नीलादेवीदीर्घवंशभुजानंदवैभववान् पूर्वोऽमरसर्वमूलभूतः । १।७।८। अमराणां सर्वकारणमादिममराणाममृतं दत्तवन्तं गोपकिसलयं सम्यक् पूर्त्याऽवगाह्य मदात्मा सम्यगालिंगितवानितः परं त्यजेत्किम् । १ । ७ । ९ । त्यजेच्चेत्त्यऽजेदभिगच्छेच्चेदऽभिऽगच्छेत्प्रवेशाऽशक्यो निरोधशून्यो मत्स्वामी



असहशतद्गुणान् गीत्वा न श्रान्तास्स्मो दिवारात्रमभिगम्यावगाह्य । १ । ७ । १० । अवगाह्य भ्रमरैर्भुज्ज्यमानतुलसीकिरीटमाश्रितस्य सुन्दरकुरुकापुरीशठकोपस्य निबिडवाक्यसंदर्भवत्सहस्रे एतद्दशकं शिथिलयित्वा रोगान् द्रावयेत् । १ । ७ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

पुंसः श्रियः प्रणयिनः पुरुषार्थसीम्नो निंदन्कलांतरपरान्निरवद्यगन्धात् । तद्रस्यतार्हगुणनातसमर्थनेन तत्सेवनं सरसमाह स सप्तमेन ॥ ७ ॥

सञ्चिचाकर्षहेतोरघशमननिधेर्नित्यभोग्यामृतस्य
त्यागे हेतूज्झितस्य प्रवहदुपकृतेर्दुस्त्यजस्वानुभूतेः ।
त्यागाकांक्षानिरोद्धुश्श्रितहृदयपृथक्कारनित्याक्षमस्य
स्वात्मश्लिष्टस्य गायच्छ्रमहरयशसस्सेवनं स्वाद्ववोचत ॥ ८ ॥

---

# अष्टमं धावतिपक्षिदशकम् ।

धावति पक्षिणमारुह्य धत्ते शीतलतुलसीं चिरकालस्थैस्तैरवगाहते स्वामी । १ । ८ । १ । स्वामी सन्पुनः सर्वसुन्दरो जातः क्रूराश्वाऽऽस्यं विदारितवान् रक्तमहानेत्रः । १ । ८ । २ । चक्षुर्भवति सदा भौमानां दिविषदां च शैत्यपूर्णवेंकटदिविषत्पर्वतवान् । १।८।३। पर्वतमेकमुद्धृत्य संकोचमंतरा तिष्ठतः स्वामिनो गुणा-

ज्योतिःपरिशुद्धामृतं निपीयनिपीय मन्मायाजन्माऽज्ञानं नाशितवान् । १ । ७ । ३ । अज्ञाननिवृत्ति मन्मनसि प्रतिष्ठितमुत्कृष्टमेव ददत्तं विद्योतमानतेजःपुंजं विस्मरणशून्यामरादिपल्लवं मदनुमतिं कमुत्काहं त्यक्ष्यामि । १ । ७ । ४ । त्यक्ष्यामि किं मम दीपं

मम प्राणं मध्य आगत्योज्जीवयंतं नाथं चौर्यमेव कृत्वा बालगोपीनां लोचनेषु विटमेव कृत्वा पश्यन्तं स्वामिनम् । १ । ७ । ५ । स्वामी महापृथिवीमुद्धृतवान् पुनरपि निबिडपरिमलितविकस्वरतुलस्यलंकृतशिराः सालवृक्षवेद्धा मायी मयि न तिष्ठेद्यदीतः परमहंसं मन्ये किम् । १ । ७ । ६ । अहं सम्मत्य मद्धृदये निवेशयामीति नाहमऽकार्षं स्वयं प्रतिज्ञायागत्य मदऽसहायचेतो वञ्चयित्वा शरीरावलंबिमदात्मसंश्लेषस्वभावोनुमन्येत किमऽथ मत्त्यागम् । १।७। ७ । मां शिथलयेदपि मम समीचीनं मनः निवर्त्तयितुं स्वयमपि न शक्नुयादितः परं नीलादेवीदीर्घवंशभुजानंदवैभववान् पूर्वाऽमरसर्वमूलभूतः ।१७।८ । अमराणां सर्वकारणमादिममराणाममृतं दत्तवन्तं गोपकिसलयं सम्यक् पूर्त्याऽवगाह्य मदात्मा सम्यगालिंगितवानितः परं त्यजेत्किम् । १ । ७ । ९ । त्यजेच्चेत्त्यऽजेदभिगच्छेच्चेदऽभिऽगच्छेत्प्रवेशाऽशक्यो निरोधशून्यो मत्स्वामी



असद्दशतद्गुणान् गीत्वा न श्रान्तास्स्मो दिवारात्रमभिगम्यावगाह्य । १ । ७ । १० । अवगाह्य भ्रमरैर्भुज्ज्यमानतुलसीकिरीटमाश्रितस्य सुन्दरकुरुकापुरीशठकोपस्य निबिडवाक्यसंदर्भवत्सहस्रे एतद्दशकं शिथिलयित्वा रोगान् द्रावयेत् । १ । ७ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

पुंसः श्रियः प्रणयिनः पुरुषार्थसीम्नो निंदन्कलांतरपरान्निरवद्यगन्धात् । तद्रस्यतार्हगुणनातसमर्थनेन तत्सेवनं सरसमाह स सप्तमेन ॥ ७ ॥

सञ्चित्ताकर्षहेतोरघशमननिधेर्नित्यभोग्यामृतस्य<br>
त्यागे हेतूज्झितस्य प्रवहदुपकृतेर्दुस्त्यजस्वानुभूतेः ।<br>
त्यागाकांक्षानिरोद्धुश्श्रितहृदर्यपृथक्कारनित्याक्षमस्य<br>
स्वात्मश्लिष्टस्य गायच्छ्रमहरयशसस्सेवनं स्वादवोचत् ॥ ८ ॥

---

## अष्टमं धावतिपक्षिदशकम् ।

धावति पक्षिणमारुह्य धत्ते शीतलतुलसीं चिरकालस्थैस्तैरवगाहते स्वामी । १ । ८ । १ । स्वामी सन्पुनः सर्वसुन्दरो जातः क्रूराश्वाऽऽस्यं विदारितवान् रक्तमहानेत्रः । १ । ८ । २ । चक्षुर्भवति सदा भौमानां दिविषदां च शैत्यपूर्णवेंकटदिविपत्पर्वतवान् । १।८।३। पर्वतमेकमुद्धृत्य संकोचमंतरा तिष्ठतः स्वामिनो गुणा-

नभ्यस्यामि सदा । १ । ८ । ४ । सदा नवनीतं हस्तौ मिश्रीकृत्य भक्षितवाननृतसंपर्को नास्ति मम शरीरसंपर्कमकरोत् । १ । ८ । ५ । संश्लिष्य मदात्मसामीचीन्यमादाता नाथ इन्द्रियाऽऽदातृमाणवको भूत्वा भूमिं स्वीकृतवान् । १ । ८ । ६ । आददौ सप्त वृषभान् भक्षितवान्सप्त लोकान् शीतलधाम कृत्वा मम मनोरथः स्वयं जातः । १ । ८ । ७ । जातो गोगोपो मत्स्येन वराहोपि स्वयं जातो मयि स्वयं जातः संगः । १ । ८ । ८ । शंखं चक्रं सुंदरहस्ते धृतवान् सर्वत्र स्वयं भूत्वाऽस्मन्नाथः १ । ८ । ९ । नाथो लोकग्राहिपादौ मत्स्वामी समुद्रवद्विजृंभमाणवेदस्वरभावः । १ । ८ । १० । जलतुल्यस्वभावस्यार्जववच्छठकोपोक्ते सहस्रे विचारितमेतदेव । १ । ८ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

कौटिल्यवत्सु करणत्रितयेपि जंतुष्वात्मीयमेव करणत्रितयैकरूप्यम् । संदर्श्य तानपि हरिस्स्ववशीकरोतीत्याचष्ट सान्द्रकरुणो मुनिरष्टमेन ॥ ८ ॥

सूरीणां स्वैरसेव्ये स्वयमवतरति क्षुद्रदिव्यैकनेत्रे
गोपाद्यर्थं धृताद्रौ श्रिततनुरसिके वामनीभावदृश्ये ।
सच्चित्तानन्यवृत्तौ विभवसमतनौ स्वायुधारूढहस्ते
नीचोच्चग्राह्यपादे निरुपधिमृजुतान्नीरवर्णे जगाद ॥ ९ ॥

---



## नवमं इदं तदन्यद्दशकम् ।

इदं तदऽन्यदऽयं सोऽन्यः सर्वं सर्वः स्वस्मिन् भूत्वा सृष्ट्वा रक्षन् तदंतरसहायकारणमस्मत्स्वामी कृष्ण उपकारको मदमृतं रसिकः श्रीवल्लभो मम पर्य्यन्ते तिष्ठति । १ । ९ । १ । निरोधेषु बहुविधेषु समर्थः प्राक्सुंदरकाले लोकं वराह एको भूत्वोद्धृतवान् केशवो मम स्वामी गजदंतं भग्नवान् दिविषदां चिन्तयितुमशक्योऽगाधदीर्घसमुद्रसंगतस्स मम समीपेऽभवत् । १ । ९ । २ । ह्रासरहितमहागुणाऽमरादिप्रधानः श्यामनीलसमीचीनविग्रहवर्णे रक्ततामरसनयनो युध्यमानपक्षपक्षिणं प्रीत्यारोहन् पुष्पांगनाऽद्वितीयवल्लभ एकगतिः भोग्यरसं दत्त्वोपरतिशून्यो मया सहैव । १ । ९ । ३ । सहावस्थानानुरागांगनाः श्र्यंगना भूम्यंगना गोपमुग्धांगना इत्येतास्तिस्रो रक्षणीयलोकास्त्रयः सहतानेकदा निगीर्य वटपत्रे संगतो मत्स्वामी समुद्राधिकमायः स्वामी कृष्णो मदवलग्नलग्नः । १ । ९ । ४ । अवलग्ने निधाय स्तन्यं पिबेति दीयमानं गृहीत्वा कोपविनाशं तदा तस्याः स्तनं प्राणविनाशं पीतवान् सर्वेश्वरो नम्रोपकारकेण सह ब्रह्मेंद्रप्रभृतिकमेकदा प्रकटितवानीशो मायी मम मनसि तिष्ठति । १ । ९ । ५ । मायी मद्धृदयस्थो-

न्यस्य कस्यापि तदस्ति किं कायो जीवश्च स्वयमेव वायुरग्निश्च स एव दूरग आसन्नः कस्यापि चिंताया गोचरो न शुद्धः संशयविपर्ययहेतुऽर्मम स्कंधयुगलस्थः ।१।९।६॥ स्कंधयुगलोपरि समीचीनवक्षसि तेजःकिरीटोपरि पादयुगलोपरि समर्पितशीतलसुंदरतुलसीयुक्तः स्वामी सौंदर्येण स्वसदृशकिंचिद्वस्तुशून्योऽभिवर्द्धमानतेजःप्रभमूर्त्तिः प्रत्यहं संश्लिष्य कदाप्यऽत्यजन् मद्रसनायां तिष्ठति ।१।९।७। जिह्वायां स्थित्वा विकस्वराणां ज्ञानशास्त्राणां सर्वेषां प्राणः शरीरं च स्वयमेव संहारेण सह सृष्टिं कुर्वाणः स्वयमेव पुष्पस्वभावचतुःपृथुलभुजशिखरो युद्धायुधचक्रशंखौ दधानो नीलोत्पलसमीचीनविग्रहः कमलनयनो मम नेत्रयोः स्थितः।१।९।८। कमलनयनो मम नेत्रयोः स्थितः पश्यामि स नेत्राभ्याममलं पश्यति पंचेंद्रियाणि तन्मूर्त्तिः कमलजं पूर्णं नेत्रनिटिलेन सह सृष्ट्वाऽमलदेवैः सह लोकं सृष्टवान् मम ललाटे तिष्ठति ।१।९।९। ललाटे स्थित्वा मां नियमयंतौ पूर्णपुष्पपादौ धृत्वा पुंजीभूततुलसीशिरसमलंकृतं कृष्णमुपकारकं प्रणमन्तएककलचन्द्रालंकृतश्चतुर्मुख इन्द्रश्चान्येमराश्च सर्वे आगत्य मम शिरसि स्थितः।१।९।१०। शिरस्येवाऽवस्थितस्य देवदेवस्य कृष्णस्योपकारकस्या-



नुरागमंतर्वर्त्तमानं विज्ञापितवत उदारकुरुकापुरीशठकोपेनैतस्मिन्नुक्ते सहस्रे एतदद्वितीयदशकस्यास्मदुपकारकस्य नित्यं विज्ञापने कृते दीर्घचरणः शिरसि सन्निधत्ते।१।९।११॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

आत्मार्जनानुभवकौतुकिनोस्य शौरिरात्मोपभोगरुचिमभ्यधिकां ददानः । देव्यादिवद्रसयिता क्रमतोखिलाङ्गान्याशिश्रयत्तदवदन्नवमे शठारिः ॥ ९ ॥

पर्यंतेङ्के च दृष्टं स्वविरहविमुखं डिंभवत्पार्श्वलीनं
चित्ते कलत्रप्रवेशं भुजशिखरगतं तालुसिंहासनस्थम् ।
चक्षुर्मध्ये निविष्टं स्थितमलिकतटे मस्तके तस्थिवांसं
मत्याहारोक्तरीत्या विभुमनुबुभुजे सात्म्यभोगप्रदानात ॥१०॥

---

## दशमं युद्धचन्महादीर्घदशकम् ।



युद्धचन्महादीर्घयुद्धचक्रशंखाभ्यां श्रीमन्महादीर्घचरणं सप्तसु लोकेषु प्रणमत्सु अद्वितीयमाणवकवामनो भूत्वा विवृद्धं तन्नीलमाणिक्यं मम नेत्रान्तर्भवेत् । १ । १० । १ । नेत्रान्तस्तिष्ठेत्परमभक्त्याश्रयति चेद्गणनाया आगच्छेदितः परं किमपेक्षितं पृथिवी च नीरमग्निश्च समीचीनवायुश्चाकाशश्च भूत्वा परिणमन्तमस्मदुपकारकम् । १ । १० । २ । मत्स्वामिनं मत्पि-

तृतत्पितृत्वत्पितॄणामपि स्वामिनं शीतलतामरसनयनं वंजुलतनूकृतसूक्ष्मसदृशावलग्नवक्षसं मत्स्वामिनं भजस्व भव्यमनः । १ । १० । ३ । हे चेतः साधुसाधु त्वां लब्धवंतश्चेत्किकर्त्तुं न शक्नुम इतः परं केनाऽपूर्णां वयं युवानं कुसुमांगनानायकं मरणकालेप्यजहदनुसर । १ । १० । ४ । अद्राक्षीश्चेतः कर्मणां फलने कांचिद्गुणनामपि विनाऽऽगत्य फलनप्रकारं भक्षितवंतं सप्तलोकीमद्वितीयपादत्रयेण स्वीकर्त्तारं दृष्टवदसि त्वमपि । १ । १० । ५ । त्वमहं चैवं तिष्ठावश्चेदितः परमन्यकिंचिद्रोगसंबंधं न घटयेद्धृदयावदं माता च पिता च भूत्वैतल्लोकेऽवतरन्नीशो मणिवर्णो मत्स्वामी । १० । १० । ६ । मत्पितरित्यस्मत्स्वामिन्निति च चित्ते निवेशयामि वदामि पापोहं हे पितरस्मत्स्वामिन्निति च दिविषद्भिश्चित्ते निवेश्योच्यमानं श्रीमन्तम् । १ । १० । ७ । श्रीमन्नारायण इति शब्दे श्रुतेपि प्रवहति नेत्रजलं विचिनोम्याश्चर्यमेव रात्रौ समीचीने दिवसे च मध्ये विच्छेदमंतरा स्नेहं कृत्वा मां न त्यजति विश्वस्य पूर्णः । १ । १० । ८ । पूर्णं सुंदरकुरंगपुरस्थितं तत्पीतस्वर्णसदृशोज्ज्वलश्रीमूर्तिऊर्ध्वदेशवासिदिविषदाऽऽदिं सुन्दरज्योतिरस्मत्स्वामिनं किमुत्का विस्मरिष्यामि । १ । १० । ९ । विस्मरणं ज्ञानं चाहमेकमपि न जानामि विस्मरिष्या-



मीति रक्ततामरसनेत्राभ्यां विस्मरणनिवृत्त्यर्थं मद्धृदये प्रतिष्ठितं विस्मरामि किमितःपरमहं मन्मणिम् । १ । १० । १० । मणिं दिविषच्चक्षुः स्वस्याद्वितीयालंकारं सुंदरकुरुकापुरीशठकोपेन वाचिककैंकर्य्यतया निर्मिते सहस्रे एतद्दशकं सह तृप्तिशून्या अभ्यस्यन्ति चेद्भिया फलति । १ । १० । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

इति श्रीसहस्रगीतौ प्रथमं शतकं समाप्तम् ।

इत्थं श्रियःपतिकृतस्वसमस्तदेहसंश्लेषलक्षणफलस्य सुदुर्लभस्य । भक्त्यादिवत्स्वगणनेऽपि च तत्प्रसादान्निर्हेतुकत्वमवदन्दशमे शठारिः ॥ १० ॥

विष्वग्विक्रान्तिदृश्यं विगणनसुलभं व्यक्तपूर्वोपकारं
स्वांतस्यैकाग्र्यहेतुं स्वयमुदयजुषं बन्धमात्रोपयातम् ।
चिन्तास्तुत्यादिलक्ष्यं नतजनसततश्लेषणं दर्शिताचै
स्मृत्यै चित्ते मिषंतं स्ववितरणमहौदार्यदृष्टोभ्यचष्ट ॥ ११ ॥
आदावित्थं परत्वादखिलसमतया भक्तसौलभ्यभूम्ना
निश्शेषागस्सहत्वात्कृपणसुघटनाच्छक्यसंराधनत्वात् ।
स्वादुस्वोपासनत्वात्प्रकृतिऋजुतया सात्म्यभोगप्रदत्वाव्याजोदारभावादमनुत शतके माधवं सेवनीयम् ॥ १२ ॥

---

# अथ द्वितीयशतके प्रथममुच्चलद्भंगाक्रान्तदशकम् ।

उच्चलद्भंगाक्रांतसमुद्रानूपस्थभव्यनारदेंऽबायाममर वर्गे च स्वपत्यऽपि त्वं न स्वपिषि आधौ वैवर्ण्ये चोपरि व्याप्नुवति वयमिव त्वमपि लक्ष्मीकांतेनापहृतचित्ता किम् । २।१।१। अपहृतचित्ते तीक्ष्णवाक क्रौंचि दीर्घयामानप्राप्य शथिलासि दासभूता वयमिव त्वमपि भुजगशयनस्य पादार्पितशीतलतुलसीदामाऽभिलाषितवती किम् ।२ । १ ।२। कामितार्थाऽप्राप्त्या सहाहो नक्तं दिवं त्वं सर्वं न निद्रासि द्रुतचित्तो बिभेषि अग्निं कात्स्न्र्येन दक्षिणलंकायां प्रवेशितवतश्चरणाभिलाषिणीभिरस्माभिः प्राप्तं प्राप्तवानसि मंगलं शब्दायमानार्णव । २ । १ । ३ । समुद्रे पर्वत आकाशे च विचिन्वाना वयमिव तेजःसंवलिते नक्तंदिवं न निद्रासि शीतलमारुतहिंसकत्वाधिगतायुधचक्रस्वामिनं दिदृक्षुस्त्वं शरीररोगं प्राप्तवानसि किं कल्पेकल्पे ।२ । १ । ४ । कल्पेकल्पे लोकार्थं जलं वहत्सख्यश्च वयमिव जलरूपेण द्रुतोऽसि सुखमास्वाभ्र त्वमपि मधुसूदनस्य वीरगृहीतं तद्विषये पाशेन शिथिलं भवसि । २ । १ । ५ । शैथिल्यरूपा वयं वा पूर्णचंद्र त्वमिदानीं नीलाकाशांधकारं न निराकरोषि कुंठितः क्षीणोसि पंचवक्त्रभुजगशय्यायां चक्रमहेश्वरस्य सत्यं वचः श्रुत्वा त्वच्छरीरकीर्तिं त्याजितोसि । २ । १ । ६ । पराजितं भव्यं मनोऽस्मत्स्वामिनो नारायणस्याऽस्मन्निर्वेदमुक्त्वा रुदतीरस्मान् त्वं मध्ये शत्रुप्रकारेभ्यो घोररूपः सन् सर्वकालं शात्रवे तिष्ठसि किं सुखं जीव घनांधकार २ । १ । ७ । अंधकारदृढवर्णमहाजलसमुद्रपरिवाहाऽत्यंताज्ञानं प्राप्याहोरात्रोपरमपि त्वं न निद्रासि आगच्छच्छकटं पादेन ताडितवतः सर्वेश्वरस्य कृपायां महाऽऽशायां निमग्नः क्लेशितोसि ।२। १ । ८ । अनुभवाऽविनाश्यानुरागरोगो मृदुप्राणमंतःशोषयत्यनश्वरदीप त्वमपि दयाशीलो रक्ततामरसविशालनयनस्य रक्तबिंबाधरस्यास्मत्स्वामिनः सुन्दरमालातुलस्याऽऽशया दह्यसे । २ । १ । ९ । दाहाऽविनाश्याशारोगे मृदुप्राणमंतः शोषयति विच्छेदमंतरा नक्तं दिवं त्वद्विषये पातयित्वोपरतोस्मि तुरगास्यं विदार्यार्जुनद्रुममध्ये गत्वा भूमिमाक्रांतवन्नित्यस्वभावकारणभूतेतःपरं मां मात्याक्षीः । । २ । १ । १० । अविकीर्णसर्वपदार्थादिज्योतिष्यनिवर्त्यानुरागकुरुकापुरीशठकोपेनाद्वितीयसहस्रसंख्ययोक्त एतद्दशकमत्यजंतो न त्यजेयुः पश्यत वैकुण्ठं निश्चितम् । २ । १ । ११ ।

श्रीदिव्यसूरिच०शरणम् ।

पूर्वानुभूतमुरवैरिगुणप्रवृद्धतद्बाह्यसंगमरुचिस्तदलाभखिन्नः । सर्वानपि स्वसमदुःखिन एव भावानाह द्वितीयशतकस्य शठारिरार्ये ॥ ११ ॥

निद्रादिच्छेदकत्वादरतिजननतोऽजस्रसंक्षोभकत्वा-
दन्वेष्टुं प्रेरकत्वाद्विलयवितरणात्कार्श्यदैन्यादिकृत्त्वात् ।
चित्ताक्षेपाद्विसंज्ञीकरणत उपसंशोषणावर्जनाभ्यां
दृष्टास्वादस्य शौरेः क्षणविरहदशादुस्सहत्वं जगाद ॥ १२ ॥

---

# द्वितीयं दृढपदप्रभृतिदशकम् ।

दृढपदप्रभृति सर्वं भूत्वा संख्यातीतोऽस्मत्स्वामी भूमिमाकाशं सर्वं सह भक्षितवान् अस्मत्कृष्णो नेत्रं विना नास्त्येकं नेत्रम् । २ । २ । १ । किं पापं भर एव हा सप्तलोकीं नष्टपापां कृत्वा कृपया रक्षिता को महापातकनिवृत्त्यर्थं हरस्य भिक्षाप्रदं गोपालबलवत्सिंहश्रेष्ठं विना । २ । २ । २ । वृषभवंतं पुष्पवंतं पुष्पांगनां तामऽपृथक्केनाऽऽकाशे नमतिस्वांतर्निवेश्योपरितनानतिशयितुं वर्द्धित्वा पृथिवीमाक्रांतवत ईश्वरादतिशयितमेकं दैवतमस्ति किम् । २ । २ । ३ । देवताः सर्वपदार्थानुत्पादयितुं पुष्पे चतुर्मुखं सृष्टवतो देवादस्मात्स्वामिनोऽतिरिक्तस्य पुष्पं पूजनं चानुरूपंकिम् ।



। २ । २ । ४ । योग्यगुणः स्वैककारणेऽतिशयितदेवान् सर्वपदार्थान् स्रष्टुं योग्यः सुंदरतामरसनयनः स्वामी परंज्योतेरुपरि ज्ञाता को वा । २ । २ । ५ । यावंतो यावंति च सर्वे पदार्था ग्रहणं विना यथा स्वांतर्निवेशेरन् तथा स्थितो विस्तृतज्ञानप्रवाहतेजोमूर्त्तिः सोऽस्मदीयार्णवसुन्दरशय्यावान् । २ । २ । ६ । शय्यावटदलं सप्तलोकीग्रहणक्षम उदारो बलवदुदरः स्वामी अन्तः को जानाति तदीयकपटमायामनोव्यापारम् । २ । २ । ७ । संकल्पे देवान्सर्वपदार्थांश्च वर्त्तितवंतं मायिनं स्वामिनं विना को वा संविधाय दृढस्थितिं त्रिलोकीं स्वान्तर्निवेश्य रक्षणस्वभावः । २ । २ । ८ । रक्षणस्वभावः कृष्णस्वामी मेलनं कृत्वा स्वनाभ्यंतःसमर्थदिङ्मुखमिंद्रं दिविषद उत्पादितवान् देवलोकांश्च । २ । २ । ९ । कपटानस्मान् सप्तलोकांश्च स्वान्तरुत्पादितवान् स्वामिन्निति श्वेतवृषभश्चतुर्मुख इंद्रो दिविषदो गरुडवाहनचरणावाश्रित्य स्तुवंति । २ । २ । १० । स्तुवत्सु सप्तलोकानाक्रांतवंतं सुन्दरनटं कुरुकापुरीशठकोपोक्ते संपन्ने सहस्रे एतद्दशकं सह स्तोतुं शक्तानां नास्ति किंचिदवद्यम् । २ । २ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

संश्लिष्य दुःखशमनान्मुदितः प्रसंगात्तन्मूलमञ्जनयनस्य महेश्वरत्वम् । आह्वान्वयादितरतोऽपि मनुष्यभावे पौराणिकोक्तनयतश्शठजिद्द्वितीये ॥ १२ ॥

पूर्णैश्वर्यावतारं भवदुरितहरं वामनत्वे महान्तं
नाभीपद्मोत्थविश्वं तदनुगुणदृशं कल्पतल्पीकृताब्धिम् ।
सुप्तं न्यग्रोधपत्रे जगदवनधियं रक्षणायावतीर्णं
रुद्रादिस्तुत्यशीलं व्यवृणुत ललितोत्तुंगभावेन नाथम् ॥ १४ ॥

---

## तृतीयं शरीरे वर्द्धमानजीवदशकम् ।



शरीरे वर्द्धमानजीव साधु भो त्वां लब्ध्वा दिविषदां स्वामी मधुसूदनोऽस्मत्स्वामी स्वयमहं च सर्वे मिथः संश्लिष्य निर्वृतो मधुक्षीरघृतेक्षुरसामृतवत् । २ । ३ । १ । सहस्राधिकशून्यो महामायी सहस्रसर्वपदार्थानामात्मा मम जननी सा माता पिता भूत्वाऽज्ञातज्ञापकगुरो त्वत्कृतानि दासोऽहं न जानामि । २ । ३ । २ । अज्ञानकाले दास्ये प्रीतिमुत्पाद्य ज्ञानशून्यमहामायायां दासभूतं मां स्थापितवान् अविदितो वामनो भूत्वा भूमिं महाबले त्रिपदमित्यवेदनं वंचितवान् मदात्मानमंतः प्रविश्य । २ । ३ । ३ । मदात्मनांतस्संश्लेषमहासमीचीनोपकारकस्य प्रत्युपकारत्वेन मदात्मानं दत्त्वा निर्वृतोस्मि इतः परमपहार इत्यस्ति किं मदा-



त्मात्मा च त्वं लोकान् सप्त भक्षितवान् स्वामी मदात्मा कोऽहं कः दाता त्वं स्वीकृतवान् । २ । ३ । ४ । इतः परं केषामपि ज्ञानैर्ग्रहीतुमशक्यमत्स्वामिन् पक्वानां पदानंदमत्तसमुद्रो भूतामृता सहायमद्वृद्धिकारणलोकान् सप्त वराह एको भूत्वाऽग्रयुक्तदंष्ट्रायां निहितवानसि त्वत्पादं प्राप्तवानहम् । २ । ३ । ५ । प्राप्तानां क्रूरपापानां क्रूरविषं दृढमतिमध्यवसायवतां मनोऽत्यजंतं तदात्मानं विनाशरूपामेवाधिगतिमप्रयच्छंतं तेजो राक्षसीनासिकायां च्छेत्तारं दासोहमाश्रितवान् प्रथममेव । २ । ३ । ६ । प्राचीनसमीचीनवीणाभ्यस्यमानशास्त्रतंत्रीपरिपक्वरस बहुसमीचीनाभ्यस्यमानपर पवित्रेक्षुरसामृतवर्षुकबलाहक मत्कृष्ण त्वां विना न भवामि मां भोस्त्वं लक्ष्यं कुरु । २ । ३ । ७ । लक्ष्यीकृतज्ञानैर्बहुकल्पं साधनीयतपोमार्गमवलंब्यैतज्जन्मन्येवाल्पकालेन प्राप्तवानहं शिक्यस्थं नवनीतं दुग्धमविदितं भुंजानं स्वामिनमनुमार्गसक्तमना भूत्वा जन्मपापं निराकृतम् । २ । ३ । ८ । परिमलपूर्णशीतलसुन्दरतुलसीकृष्णस्य दिविषन्नायकस्यासहस्राभ्रस्य परमस्य पवित्रस्य गुणान् गुल्मवद्व्याप्तरोगाणां निवृत्तयेऽभिगम्य प्रविश्यावगाह्य दासोहमास्वं भोजयित्वा पीत्वा हृष्टोस्मि । २ । ३ । ९ । हर्षके-

षशून्यो जन्मनाशव्याधिजराशून्यो दीप्तिमज्ज्योतिर्भूत्वा संगमिष्यामि कदा वर्षुकाऽऽकाशैतत् पृथिवीं च तेजश्चक्रशंखौ धृत्वा रक्षतो मायिनः स्वामिनो दासानां संघैः । २ । ३ । १० । संघयुक्तमहासुरकुलनाशाय कुपितं संघयुक्तकुरुकापुरीशठकोपेन ज्ञात्वोक्ते संघयुक्तसहस्रे एतद्दशकं सह गीत्वा संघीभूता दासैः सह संश्लिष्य स्थित्वा नृत्यंतु । २ । ३ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

अन्तस्थसर्वरसमम्बुजलोचनस्य संयोगरूपमवगाह्य सुखामृताब्धिम् । तद्देशिकप्रथमसूरिगणैकदास्यात्संगो ममेत्यकथयत्स मुनिस्तृतीये ॥ १३ ॥

चित्रास्वादानुभूतिं मियमुपकृतिभिर्दास्यसारस्य हेतुं
स्वात्मन्यासार्हकृत्यं भजदमृतरसं भक्तचित्तैकभोग्यम् ।
सर्वाक्षप्राणनार्हं सपदि बहुफलस्नेहमास्वाद्यशीलं
सभ्यैस्साध्यैस्समेतं निरविशदनघाश्लेषनिर्वेशमीशम् ॥ १५ ॥

---

## चतुर्थं नर्तित्वानर्तित्वादशकम् ।



नर्तित्वानर्त्तित्वा चित्ते द्रुता सस्वरं गीत्वागीत्वा नेत्रजलं प्रस्राव्य सर्वत्र विचित्यविचित्य नरसिंहेति ग्लात्वा ग्लायतीयं दीप्तिमल्ललाटा । २ । ४ । १ । दीप्तिमल्ललाटेयमाविर्भमन्मौग्ध्या त्वद्दर्शनाशयांतः



शिथिला भवति बलवद्बाणसहस्रभुजान् च्छिन्नवानसि त्वां द्रष्टुं त्वमनुकंपाशून्यः । २ । ४ । २ । आर्द्रहृदयेनाऽनलसंश्लेषवल्लाक्षामभूच्छिष्टतुल्येयं कृपां न करोष्येतस्य किं कुर्यां रक्षोलंकानाशितवतः । २ । ४ । ३ । लंकानाशकेति वदति पुनश्च बलवत्यक्ष्युच्छ्रितेति वदति हृदयव्याकुलं दीर्घं निश्वसिति नेत्रजलाधिकं क्षुभितांजलिं बध्नाति स्थित्वेयमेव । २ । ४ । ४ । इयमहोरात्रं प्रलप्य स्वनीलोत्पलसुन्दरनेत्रयोर्जलं धत्ते चंचरीकव्याप्तशीतलसुन्दरतुलसीं न प्रयच्छसि का धवलवर्णस्य दया । २ । ४ । ५ । दयालो इति वदति पुनश्चात्यंतमाद्रियते उपकारकेति वदति मदीयप्रत्यगात्मन उचितामृतेति वदति अन्तरत्यंतं द्रवीभूयस्थित्वांतरेव । २ । ४ । ६ । अन्तः शुष्कप्राणा म्लायं म्लायं मम महोदार कृष्णेति वदति पुनश्च पूर्णजलशायिन्निति वदति मम वंचिकया स्वयमधिगता वंचना । २ । ४ । ७ । वंचकेति वदति अंजलिं करोति स्वमनोदाहं दीर्घं निःश्वसिति बलवत्कंसं वंचितवानसि त्वां शरण्यमिति वदंत्यानया प्राप्तानि । २ । ४ । ८ । अस्तमनकालमुदयकालं न जानाति परिमलमधुयुक्तकुसुमशीतलतुलसीति वदति तेजोवर्त्तुलसुखसूक्ष्मनेमे भवदिष्टं किं वै तस्यां मुग्धायाम् । २ । ४ । ९ । चपला बाला न-

कंदिवं स्वीयासदृशसुंदरनेत्रयोर्जलं विभर्त्ति प्रवृद्धेश्च-
र्यदाहं लंकां नाशितवानस्य मुग्धनयनमेकं मा
ग्लपय । २ । ४ । १० । अक्षीणगुणवामनं स्वरयुक्त
उदारशठकोपोक्तेऽतिशयितगाथाऽद्वितीयसहस्रे एतद्दश-
केन चरणयोः समर्पणयोग्यः सुन्दरदाम्नाम ।२।४।११।

श्रीदिव्यसूरिचरणावेव शरणम् ।

तत्प्रार्थितानधिगमेन समुत्थितार्त्ति-
रंत्रेहरेः परमुखेन यथा विधेयम् ।
आर्तेर्निवेदनमपाकरणार्थनं च
मूर्च्छां तथा मुनिरगान्महतीं चतुर्थे ॥ १४ ॥
प्रह्लादार्थे नृसिंहं क्षपितविपदुषावल्लभं क्षिप्तलंकं
क्ष्वेलप्रत्यर्थिकेतुं भ्रमहरतुलसीमालिनं धैर्यहेतुम् ।
त्राणे दत्तावधानं स्वरिपुहतिकृताश्वासनं दीप्तहेतिं
सत्प्रेक्षारक्षितारं व्यसननिरसनं व्यक्तकीर्तिं जगाद ॥ १६ ॥

---

## पंचमं सुन्दरधाम दशकम् ।

सुन्दरधामप्रीतिं कृत्वा मदात्मना मिलितस्य स्वा-
मिनः सुंदरदामविलसत्किरीटं शंखश्चक्रं सूत्रं हारः संति
रक्ततामरसविशालनयने रक्तफलाधरो रक्तकमलं रक्त-
तामरसचरणौ तप्तहाटकः श्रीविग्रहः ।२।५।१।श्रीविग्रह
आकाशज्योतीरक्ततामरसनेत्रं करः कमलं श्रीस्थानं व-



क्षोऽजस्य स्थानं नाभिरवशिष्टस्थलं मम पितुः स्वामिनो
रुद्रस्थलमेकमशेषयित्वा ममांतर्मिलितस्यआः।२।५।२।
मदंतर्मिलितस्य रक्तस्निग्धाधरो रक्तकमलं विद्योतमान-
तेजःपर्वतस्य नेत्रं पादः करः कमलं स्थिरपूर्णसप्तलो-
क्युदरे स्वांतरप्रविष्टः कोपि पदार्थो नास्ति ।२।५।३।
सर्वपदार्थः स्वयं भवन्मरकतपर्वतस्य तुल्यः तात्का-
लिकतामरसपुष्पं नेत्रं पादः करं कमलं सर्वस्मिन्
काले प्रतिदिनमाससंवत्सरप्रलयं तत्तत्कालेषु ममातृ-
प्तामृतम् । २ । ५ । ४ । अतृप्तामृततयाऽसदात्मनां
तर्मिलितस्य वर्षाकालपूर्णनीलमेघसदृशस्यास्मत्स्वा-
मिनः कृष्णस्य सदृशं न भवत्यधरस्य रक्तप्रवालं
नेत्रपादहस्तस्य कमलं महाहारो दीर्घकिरीटं यज्ञोपवीत-
मन्यानि चाभरणानि वहूनि २ । ५ । ५ । वहून्या-
भरणानि नामानि बहूनि बहूनि ज्योतीरूपाणि प्रकारे
चिंत्यमाने बहवो दर्शनभक्षणश्रवणस्पर्शनाघ्राणजा-
नंदाः बहूनि ज्ञानानि च सर्पशय्योपरिस्थितस्य ।
२ । ५ । ६ । सर्पशय्योपरि क्षीरसमुद्रे शयनं वंशसदृ-
शभुजन्नीलार्थमृषभाणां सह सप्तानां तिरस्करणं च
सप्तमधुनिबिडवनीभूतसालतरूणां सप्तानां लवनं कुसुम-
ग्रथितशीतलतुलसीस्वर्णकिरीटः समीचीनयुद्धर्षभः ।
२ । ५ । ७ । हेमकिरीटं सुंदरसमरपुंगवमस्मत्स्वामिनं

चतुर्दीर्घभुजं स्वावधिशून्यं शीतलतुलसीमालिनं मदवधिमज्ञात्वा मदन्तःप्रविष्टं कीर्तयितुमवधिं न पश्याम्यहं वक्तव्यं किं वदत । २ । ५ । ८ । वदतास्मत्स्वामिनं मदात्मात्मानं निरवधिकगुणं मदीयनीलमाणिक्यज्योतिःसमीचीनामृतं दुर्लभपदं भूत्वा कमलकुसुमपरिमलसदृशः पुमान्न स्त्री न । २ । ५ । ९ । पुमान्न स्त्री नावशिष्टनपुंसकोऽपि न भवति दृश्योपि न भवति अस्ति न नास्ति न आदरणकाल आदर्त्तव्यरूपवान् न तादृशो भवति आयासं महांतमाश्रित्य स्वामिनः कीर्त्तनम् । २ । ५ । १० । कीर्त्तनस्यैकस्यागोचरं कुंभनर्त्तकं स्वामिनमुद्दिश्य कीर्तनमेवोद्दिश्य कुरुकापुरीशठकोपेन कीर्त्तितैंताद्येकसहस्र एतद्दशकं संकीर्त्तयितुं समर्थाः संति चेत्प्राप्नुयुर्वैकुंठम् ।२।५।११।

श्रीदिव्यसूरिचरणावेव शरणम् ।

आगम्य सूरिसहितस्समपाकृतार्ति-
रस्युज्ज्वलं मरकताचलसन्निभांगः ।
ईशः प्रफुल्लकमलाक्षिकरांघ्रिरासी-
त्पंचमे स कथयन्मुनिराननन्द ॥ १६ ॥

स्वमाप्त्या सिद्धकांतिं सुघटितदयितं विस्फुरत्तुंगमूर्तिं
प्रीत्युन्मेषातिभोग्यं नवघनसरसं नैकभूषादिदृश्यम् ।
प्रख्यातप्रीतिलीलं दुरभिलपरसंसद्गुणामोदहृद्यं
विश्वव्यापृतचित्रं व्रजयुवतिगणख्यातगीत्यान्वभुङ्क्त ॥ १७ ॥

---



## षष्ठं वैकुण्ठदशकम् ।



वैकुण्ठ मणिवर्ण मद्वंचक श्रीवामन मद्धृदये प्रविष्ट प्रतिकालममृतभूताकाशर्षभ क्रियमाणदुर्लंघ्यपापानि त्वद्दासानां निवर्त्यासुरान् पापानि प्रापयत् कुंद त्वामहं गृहीतवान् जानीहि सम्यक् ।२।६।१।सम्यगरूपैकपदार्थाबहिर्भावं स्वांतर्लोकान्युगपन्निगीर्योद्गीर्य प्रविष्टः प्रवेशानंतरमतिशयितज्ञानप्रवाहप्रभादीपः कंपशून्यामृतः सन्कुत्रापि पार्श्वावलोकनानभिज्ञो मदीयस्पृहणीयतामरसनेत्रः ।२। ६ । २ । तामरसनयनं दिविषत्स्तुत्यं प्रधाननाथं तुलसीपरिमलपुष्पयुक्तमालिनमस्मत्स्वामिनं स्वर्णपर्वतं वयमभिगम्य सम्यक्स्तुत्वाऽनुसंधाय नत्वा वयं हृष्टा नृत्येम तथा रसनाविकस्वरगाथाऽभिनिवेशस्थितिप्रदस्वभावोदार । २ । ६ । ३ । परमोदार मधुसूदन मदीयमरकतपर्वत त्वां स्मृत्वा त्यागं दत्तवन् स्वामिंस्त्वां कुतस्त्यक्ष्यामि समुद्रतुल्य त्वद्गुणानऽवगाह्य नर्त्तित्वा गीत्वा गर्वितः प्रीतः प्रीतो विद्यमानरोगान् सर्वान् विद्राव्योज्जीवन्नुपगम्य स्थित्वा । २ । ६ । ४ । उज्जीवित उपगतो ममानंतक्रूरपापानि विनाश्य त्वदीयांतशून्यदास्यं प्राप्तोहं त्यक्ष्यामि किं पंचविशालशिरोन्नृत्यद्भुजगशय्यां प्राप्य क्षीरार्णवे योगनिद्राचि-

न्ताकृत् स्वामिंस्त्वां स्मारंस्मारम् । २ । ६ । ५ । त्वां स्मारंस्मारं त्वद्दीर्घमहागाथाः सस्वरं गीत्वा नर्त्तित्वा मत्प्राचीनक्रूरकर्माणि समूलं च्छिन्नवानहं त्वां मनसा त्यक्तवतो हिरण्यस्य विशालं वक्षो विदारितवन्मदनादिबलवत्सिंहाशक्यं किं मम । २ । ६ । ६ । अशक्यं किं ममेतःपरं कृत्स्नसप्तलोकान् भक्षितवानाहत्यागत्य मद्धृदये प्रविष्टो न जह्यादितः परं गुल्मवद्व्याप्तान् रोगान् सर्वान् दूरीकृत्य मदीया अधस्तादुपरि सप्तसु जन्मस्वनवसानघोरनरके सर्वदा प्रवेशं त्यक्तवंतः । २ । ६ । ७ । पर्य्यायेण बहूनि जन्मानि प्राप्य चरणावाश्रित्यातःशुद्धो नाशरहितानंदमहाप्रवाहेऽहं निमग्नः शिथिलशिथिलसुराणां बहवः संघा भस्मीभवेयुस्तथाऽभिधावंतं विहंगमेकमारुह्य वैलक्षण्येन स्थितोसि त्वां मद्धृदयान्न व्यावर्त्तय मत्स्वामिन् । २ । ६ । ८ ॥ मत्स्वामिन् शीतलश्रीवेंकटवासिन् लंकानाशक सालवृक्षान् स्थूलमूलान् सप्त भेत्तुमेकं शरं प्रयोक्तवन् धानुष्क गुच्छानिबिडशीतलसुंदरतुलसीमालाभृत त्वां मद्धृदय एकद्रव्यवद्योजितवन् मत्तरुण दिविषन्नायकेतःपरं क्व गंतव्यम् । २ । ६ । ९ ॥ वर्त्तमानकालेषु भूतकालेषु भविष्यत्कालेषु माता पिताऽऽत्मा भवेस्त्वामहं प्राप्तः कथं त्यजामि



व्याप्तानादिगुणत्रिलोकीनाथ परमशीतलवेंकटस्थितिमन् शीतलतुलसीपरिमलवासितमाल । २ । ६ । १० । मालाशीतलसुंदरतुलसीकिरीटं कमलविशालमहानेत्रं गुणेऽवगाह्य सुन्दरकुरुकापुरीशठकोपेन मारेणोक्तेिचिंत्यमानभ्रंशशून्येऽन्तादिसहस्र एतदेकं दशकं गीतिना सह स्वरे गातुं समर्थास्ते केशवदासा एव । २ । ६ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

---

नीचं च मामधिगतोयमिति स्वशक्त्या जातां हरे स्वविरहागमनेऽतिशङ्काम् । षष्ठे निरस्य दृढसंगगिरा शठारिरात्मान्वयिष्वपि तदादरतोभ्यनन्दत् ॥ १६ ॥

स्वास्वादस्यापकत्वाच्छ्रितनियतदृशैनैकभोगप्रदाना-
त्त्यागानर्हप्रकाशात्स्थिरपरिचरणस्थापनात्पापभङ्गात् ।
दुस्साधार्थस्य सिद्धेर्विरहभयकृतेर्दुर्विभेदात्मयोगा-
न्नित्यानेकोपकारात्स्वविरहचकितं प्रेक्षतांभोरुहाक्षम् ॥ १८ ॥

## सप्तमं केशवीयादशकम् ।



केशवीया अधस्तादुपरि मदीयाः सप्तसु सप्तसु जन्मस्वपि महाचातुर्य्यमिदं प्राप्ता अस्माकं श्रीः समृद्धा भवति आः ईशेन मन्नीलमाणिक्येन मद्रक्तसुंदरनयनेन दिविषन्नायकेनास्मदुपकारकेण स्वामिना नारा-

यणेन । २ । ७ । १ ॥ नारायणः कृत्स्नसप्तलोकीनाथो वेदमयः कारणं क्रिया कर्मैतेषां कारणं मत्पिता श्रीमदप्राकृतामरैरन्यैर्बहुभिर्नत्वा स्तूयमानतया स्थित्वा वारणस्य दंतं भग्नवानुपकारको मम माधव एव २ । ७ । २ । माधव इत्येतदेवावलंब्य मामितःपरमेतत्पश्चाद्भावीन्यवद्यानि यानि कानि च न प्रापयामीति मद्दंतः प्रविश्य स्थितो दुष्कृतपापे नाशयन्नमृतो रक्तामरसनयनः पर्वत ऋजीषावदचरहितेक्षुरसखण्डोऽस्मत्स्वामी मम गोविन्द एव । २ । ७ । ३ ॥ गोविन्दः क्षुम्भनर्त्तको गोपाल इत्युच्चोच्चा नर्त्तित्वा देवत्वं स्वात्मानं च गातुं नर्त्तितुं शिक्षित्वा मां स्वीकृत्य मदीयपापानि पलाययित्वा मदीयान्सप्तसु सप्तसु जन्मसु प्राप्तृत्वस्वभावानकरोत्समर्थोऽस्मदुपकारको विष्णुः।२। ७ ।४ । विष्णो प्रकाशमानरक्तज्योतिस्तामरसं पादहस्तनेत्रं विहाय प्रकाशमानरुचिः पर्वत एव श्रीविग्रहो विहाय प्रकाशमानश्चन्द्रः श्रीमच्छंखश्चक्रं सूर्यः विहाय प्रकाशमानकिरीटः स्वामिनो मधुसूदनस्य । २ । ७ । ५ । मधुसूदनं विनान्यो मम नास्तीति केनापि कर्मशून्यः स्तुतिव्याप्तगीतीर्गात्वा नर्त्तित्वा यथा स्थितः स्यां तथा प्रतिकल्पं सांमुख्येन परितोऽवरुध्य सघीभूतेषु जन्मसु ममैव कृपां कर्त्तुं विधि



रावृणोन्ममैव स्वामिनं त्रिविक्रमम् ।२।७।६ त्रिविक्रमो रक्ततामरसनयनोऽस्मत्स्वामी मद्रक्तस्निग्धाधररूपविवृद्धावदातस्फटिकवर्ण इत्येवमनुसंधाय स्तुत्वा नत्वा बहुषु कल्पेषु त्वत्पादपंकजमेव प्रीत्या प्रणमन्मन एव दत्तवानसि समर्थो ननु मम वामन । २।७।७। वामनो मम मरकतवर्ण तामरसनयन काममुत्पादितवन्नित्येवं त्वच्चरणौ गीत्वैव प्रणम्य परिशुद्धमनस्को जन्मदुःखान्निवृत्तो यथा स्यां तथा मम दुष्टं मनो नाशितवान् तव किं कुर्यां मम श्रीधर । २ । ७ । ८ । श्रीधरो रक्ततामरसनयन इत्येवं नक्तंदिवं प्रलप्य व्याकुलीभूय नयनजलं प्रवहन्नुष्णं निःश्वस्यनिःश्वस्य समन्तेतक्रूरपापनाशाय सुखवृद्ध्येऽनुदिनं त्वां मयि सुप्रतिष्ठं निवेशितवानसि मम हृषीकेश २ । ७ । ९ । हृषीकेशोऽस्मदुपकारको लंकाराक्षसकुलकाठिन्यनिवर्त्तक उपकारकोऽस्मत्स्वाम्यमरस्वामीत्येवं प्रसन्नं चेच्चेतः प्रणम दृढं जानीहि ज्ञात्वा व्यामुग्धमपि न त्यज ननु पूर्णं पद्मनाभम् । २ । ७ । १० । पद्मनाभो निरुच्छ्रायमुच्छ्रयन्महासामर्थ्यवान्मत्परो मां विरचय्य मह्यमेव स्वात्मानं ददत्कल्पको ममामृतं वार्धुकबलाहकसदृशवेंकटसमीचीनाचलवान् दिव्यानां नायको मत्स्वामी दामोदरः । २ । ७ । ११ । दामोदरमसहायकारणं भूमिं भक्षितवंतं

भवति किं सामर्थ्यं ज्ञातुं कस्य चिदित्येव प्रणमतो दामोदररूपयोः शिवस्य दिङ्मुखस्य च भवति किं सामर्थ्यं ज्ञातुमस्मत्स्वामिनं मत्समुद्रवर्णम् । २। ७। १२। वर्णमहामणिज्योतिरमरप्रधानपुरुषं कृष्णं दीर्घव्यामोहवंतं सुन्दरकुरुकापुरीशठकोपेन कृते द्रविडमालासहस्र एता द्वादशगीतियुक्ता द्वादशनामगाथाः स्वामिनश्चरणौ प्रापयेयुः।२।७।१३। श्रीदिव्यसूरिचरणावेव शरणम् ।

ते केशवाभिमततामभजंत हंत ये मामका इति वदन्नधि सप्तमं सः । तस्य स्वरूपगुणचेष्टितवाचिनामभूतद्विषट्कमुखरो मुमुदे मुनीन्द्रः ॥ १७ ॥

सर्वादिस्सर्वनाथस्त्रिभुवनजननीवल्लभः स्वाश्रितार्थी
विष्वग्व्याप्त्यातिदीप्तो विमतनिरसनः स्वाश्रिसद्भक्तिदायी ।
विश्वाप्त्यै वामनांगस्स्वविभवरसदः स्वान्तनिर्वाहयोग्यः
स्वार्येहो बन्धमोक्ता स्वजनहिततया द्वादशाख्याभिरूचे ॥१७॥

---

## अष्टमं शयनं सर्पशय्यादशकम् ।

शयनं सर्पशय्यायां सुन्दरांगनांगेनालिंगनमुभयोस्तयोः कारणं स्वयमेव सदृशो भवति सर्वपदार्थानां पदकारणं प्रतिभूर्जन्मसागरं तितीर्षताम् । २। ८ । १ । तीर्यमाणदुःखजन्मप्रभृत्यन्यद्यावत्तारयद्दुःखरहितमोक्षकारणं पुष्पितशीतलजलह्रदे गज-



दुःखनिवर्त्तकस्य सुन्दरशीतलतुलसीकस्य ममाद्वितीयनायकस्य संबन्धः । २ । ८ । २ ॥ स्रष्टाऽजो भवति संहर्त्ता हरो भवति उत्पादितस्वनाभ्या सहांगमाश्रित्य संश्लिषच्छ्रीर्भूत्वा स्ववक्षसि स्वोचितचेष्टितो महांति चेष्टितानि सर्वत्र द्रष्टव्यानि।२।८।३। विषयान् पंच चरतामिंद्रियाणां पंचानां निवृत्त्यानंदांतशून्याद्वितीयदेशप्रेप्सवो व्याकुलीभूय यथा नश्येयुस्तथाऽसुरान्हतवतः फलाग्रगे गुणेऽवगाहध्वं निरंतरम् । २ । ८ । ४ । निरंतरदुःखजन्मप्रभृतीनामन्येषां सर्वेषां नाशरहिताद्वितीयकारणं त्रिलोकीरक्षको हयो भूत्वा कच्छपो भूत्वा मत्स्यो भूत्वा मानुषो भवति देवादिदेवस्वामी मम तीर्थः । २ । ८ । ५ । तीर्थलोकविक्रांतरक्तचरणयोः सुंदरपुष्पदाम समर्प्य तदेव शिवशीर्षे स्वयं दृष्ट्वा पार्थेन निरूप्य निश्चितं शीतलतुलसीकमहत्त्वं पुनश्च केनचिद्वक्तव्यं स्थितं किम् । २ । ८ । ६ । शयित्वोपविश्य स्थित्वा क्रांत्वा वराहो भूत्वाऽधः प्रविश्योद्धरति स्वांतराच्छादयति निर्गलति पृथुलमहाभुजैः सम्यगालिंगति भूमिसंज्ञस्त्रियं स्वामिना क्रियमाणव्यामोहं को वा पश्यति । २ । ८ । ७ । पश्येत्को मदीशं कृष्णं को दर्शनप्रकारो भक्षणे कथ्यमाने सर्वे लोका एककवलाय न पर्याप्ता उन्नतस्वभावो गेहः प्राणोऽन्ये

सर्वपदार्था अष्टौ पार्श्वानपि न त्यजति व्याप्यास्ति सर्वत्र । २ । ८ । ८ । सर्वत्रास्ते कृष्ण इति वदते पुत्राय कुध्यत्यत्र नास्ति किलेति हिरण्ये स्तंभं ताडयति तत्र तत्काल एव स यथा नश्येत्तथाऽऽविर्भवतो मम सिंहस्वामिनो महत्त्वं विचार्य स्वभावं किमन्यैः २ । ८ । ९ । गुणशालिमोक्षस्वर्गनरकांतानामतिशयशालिदेवमध्यानां सर्वपदार्थानां सहकारिकारणं बीजं च भूत्वा व्याप्याद्वितीयतया स्थितं वर्षुकमेघसदृशवर्णं मम कृष्णमहमपश्यम् । २ । ८ । १० । नेत्रतलयो रक्तं नीलविग्रहं स्वामिनं भ्रमराकुलोद्यानवलुदिवळ्देशवता गीतिश्रेष्ठयुक्ते द्राविडसहस्र एतद्दशके शक्ता आकाशोपरि वैलक्षण्येन स्थित्वा नियमयंति सुमहापदम् । २ । ८ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

आत्मान्वयिष्वपि हरेः प्रियतामवेक्ष्य
सर्वात्मनस्स्वजनयन्मुनिरष्टमेन ।
मोक्षप्रदत्वमुपदिश्य तदाभिमुख्या-
लाभात्स्वलाभमधिकं बहुमन्यते स्म ॥ १८ ॥
प्राप्याकारोपपत्त्या जनिपरिहरणाद्विश्वसृष्ट्यादिशक्ते-
र्निस्सीमानन्ददेशान्वयत उपजगौ रक्षणार्थावतारात् ।
सुसख्यातानुभावाद्विविधविहरणाद्व्याप्तिवैचित्र्यवत्त्वा-
द्भक्तैर्ग्राह्यभावादखिलफलकृतेर्मुक्तिसौख्यं मुकुंदे ॥ २० ॥

---



# नवमं सुमहापदप्रकारदशकम् ।

सुमहापदप्रकारमपि न वदामः त्वद्रक्तमहापादपद्मं शिरसि योजय शीघ्रं हस्तिपशुदुःखनिवर्त्तकोपकारक स्वामिन् दासोहमपेक्ष इदमेव । २ । ९ । १ । इदमेवाहं त्वत्तः स्वीकुर्य्यां सर्वदा ममांऽजननिबिडज्योतिर्मणिवर्ण मत्स्वामिन् दुष्प्रापत्वच्चरणं मया प्राप्तुं ज्ञानहस्तं प्रयच्छ कालक्षेपं मा कृथाः । २ । ९ । २ । मा कृथा दुष्कर्मेति कृपां कुर्वन्मदीयहस्तव्याप्तचक्र कृष्णोपकारक कफव्याप्तकंठावरोधेपि त्वच्चरणं निरंतरं स्तोतु कृपां कुरु ममैव । २ । ९ । ३ । ममैव दास्यं कुरु सर्वदा पीति मन्मनस्येवागत्य मध्ये विच्छेदमंतरा स्थित्वा स्वार्थमेव मां स्वीकुर्विदमेव ममैव कृष्णविषये मया स्वीकर्त्तव्यो विशेषः । २ । ९ । ४ । अतिशयाश्रयं मोक्षं स्वर्गं नरकं मरणे प्राप्नोतु न प्राप्नोतु अहं च जन्मशून्यं बहुजन्मानं स्वामिनं विस्मरणं किंचिद्विना सर्वदाऽनुभवेयम् । २ । ९ । ५ । आनंदशालिदेवलोकाऽलोकानंदशालिज्योतिर्विकासकस्वामिन्नानंदशालिचित्तवाक्कायव्यापारैः सदानंदं प्राप्य त्वां नंतुमागच्छ । २ । ९ । ६ । आगच्छ त्वच्छ्रीपादकुसुमयोरधो विचलमहमागत्य यथा प्राप्नुयां तथा प्रदद-

त्वां मद्धृदये प्रवेशने सदाऽतृप्यन्मम सर्वदिने सर्वकाले । २ । ९ । ७ ॥ यत्किंचित्काले स्वामितया मदंतस्तिष्ठसि चेदन्यस्मिन्सर्वकाले किमपि न याचेऽतिशयितैर्वेदविमलैः कवलीक्रियमाणमच्छकराफल त्वामहम् । २ । ९ । ८ । अहमेव मां ज्ञातुमशक्तोऽहमेव मदीयमेवेत्यतिष्ठम् अहमेव त्वं मदीयमपि त्वमेवाकाशस्तुत्य मद्विविषद्वृषभ । २ । ९ । ९ । वृषभांश्चेत्सप्त च जित्वा सौंदर्यशालिलिंकां भस्मीकृतवदधिकप्रभायुक्तज्योतिर्न विश्वसिहि मां त्वत्सुवर्णचरणयोर्योजय शीघ्रमन्यत्र गंतुं कदापि न त्यज । २ । ९ । १० । अजहत्सुदर्शनस्वामिविषये आश्रयणमत्यजतोदारकुरुकापुरीशठकोपेनोक्तेऽनर्थशून्ये सहस्रे एतद्दशकं नाशरहितपदं कुर्याद्धर्मानानाम् । २ । ९ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

मोक्षादरं स्फुटमवेक्ष्य मुनेर्मुकुंदे
मोक्षं प्रदातुमसदक्षफलं प्रवृत्ते ।
आत्मेष्टमस्य पदकिङ्करतैकरूपं
मोक्षाख्यवस्तु नवमे निरणायि तेन ॥ १९ ॥

श्रद्धेयस्वांप्रियोगं शुभमतिकरदं स्तोत्रसामर्थ्यहेतुं
स्वार्थीकारोपकारं स्मृतिरसशमितान्यादरं प्रीतिवश्यम् ।
प्राप्तौ कालाक्षमत्वप्रदममृतरसध्यानमात्मार्पणार्हं
वैमुख्याद्वारयन्तं वृतपरिचरणं चक्रपाणिं जगाद ॥ २१ ॥

---



# दशमं वर्द्धमानौज्ज्वल्यदशकम् ।



वर्द्धमानौज्ज्वल्यबाल्यनाशात्प्राग्वर्द्धमानकांतिमाय्याद्दतस्थानस्य वर्द्धमानबालोद्यानावृतस्य मालिरुंशोलै पर्वतस्य शैथिल्यरहिताश्चेत्समाश्रयणं चातुर्यम् । २ । १० । १ । चतुरबालश्रीनैच्यमनाहृत्य गंभीरध्वनिशंखसुंदरनिजालयरिखद्विधुरशिखरमालिरुंशोलैस्थानं तत्स्तुत्वा वर्द्धनं फलम् । २ । १० । २ । फलशून्ये कृते फलं नास्ति चेतो वर्षुकबलाहकवर्ण सादरनित्यवासालयस्य मोहाधिकोद्यानावृतमालिरुंशोलैगिरेः सन्निहितपर्वतस्य प्राप्तिस्तत्कर्म । २ । १० । ३ । कर्मदृढपाशाञ्छित्त्वा व्याप्त्योर्जीवनार्थं महापर्वतमुद्धृतवतो माहात्म्यवासस्थानालयस्यागच्छन्मेघरिखणस्थानमालिरुंशोलैश्रीगिरेः समाश्रयणश्रमेव प्रकारः । २ । १० । ४ । असंदोहिभूतवलयक्रूरपापवृद्धिधर्मोद्योगवचक्रायुधालयस्य निर्मलोदारपर्वतसरःपरिवृतस्य मालिरुंशोलैगिरेर्बहिः पर्वतस्य समाश्रयणाय गमनमेवोपायः । २ । १० । ५ । मार्ग इति चिंतयंतु नैच्यमकृत्वा शिक्यस्थनवनीताऽदाऽऽल-

यस्य पोतैः सह हरिणीभिराश्रितस्य मालिरुंशौलैप-
र्वतस्य मार्गलग्नं तच्चिंतनमेव समीचीनम् । २ । १० ।
६ । समीचीनमिति चिन्तयंतु नरकमज्जनमकृत्वा
भूमिं पूर्वमुद्धृतवतो दीर्घवासस्थानालयस्य निर्मल-
कलानिध्याश्रितमालिरुंशौलैगिरेर्दक्षिणमार्गेण प्राप्या-
भिगमनमेव बलम् । २ । १० । ७ । बलं कृत्वा सर्वदाव-
लमविनाश्य बलोत्पादकमाय्यालयं प्रदक्षिणीकृतं दिवि-
षद्भिर्मालिरुंशौलैप्रदक्षिणीकृत्यान्वहमभिगमनं न्या-
य्यम् । २ । १० । ८ । न्यायमित्यनुसंदध्वं प्रबलपापे
मज्जनमकृत्वा पिशाचस्त्रीसंहर्त्र्युचितमहालयं बालग-
जसंघाश्रितं मालिरुंशौलै आश्रयितुमध्यवसाय एव
विश्वसनीयो विजयहेतुः । २ । १० । ९ । विजयसा-
धनमिति चौर्यं कापट्यं चाकृत्वा वेदं प्राग्विंशदीकृत-
वता हतालये सवाममयूराश्रिते मालिरुंशौलैकुसुमवि-
काशवत्पर्वते प्रवेशः पदार्थः । २ । १० । १० । पदार्थ
इत्येतं लोकं सृष्टवतो गुणविषयेऽज्ञानशून्योदारकुरुका-
पुर्य्युदारशठकोपेन वैशद्योत्पादनार्थं प्रणीतेऽद्वितीयस-
हस्र एतद्दशकं कृपावतश्चरणौ संश्लेषयेद्विनाश्यैव ।
। २ । १० । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।



एतन्निजार्थितमिहैव हरिः प्रदातु-
मासेदिवान्वनमहीधरमित्यवेत्य ।
प्राप्यं तमेव च तदन्वयिनं च सर्वं
प्राचीकशत्स दशमे दशके मुनीन्द्रः ॥ २० ॥
दीप्ताश्चर्यस्वभावं मुखरितजलजं वर्षुकाम्भोदवर्णं
शैलच्छत्राभिगुप्ताश्रितमतिविलसद्धेतिमापीतगव्यम् ।
संरम्भोत्क्षिप्तभूमिं प्रणमदनुगुणं पूतनाचेतनान्तं
पूर्वाचार्य श्रुतीनां शुभसविधगिरिस्स्थानतो निर्विवेश ॥ २२ ॥
इत्यद्भुतात्यसह्यक्षणविरहतया मानुषत्वे परत्वा-
त्सर्वास्वादत्वभूम्ना व्यसनहरतया स्वामिसंप्रीतिमत्त्वात् ।
वैमुख्यत्रासयोगान्निजसुहृदवनान्मुक्तिसारस्य दाना-
त्कैंकर्यौचित्यभावाच्छुभनिलयतया चातिभोग्यं द्वितीये ॥२३॥

इति श्रीसहस्रगीतौ द्वितीयं शतकं समाप्तम् ।

---

## अथ तृतीयशतके
## प्रथमं किरीटज्योतिर्दशकम् ।

किरीटज्योतिस्तव मुखज्योतिर्विकसितं किं चरण-
ज्योतिस्त्वदधिष्ठिततामरसज्योतिर्विकसितं किं स्वरू-
पज्योतिरंबरं बहुभूषणानि त्वत्सुन्दरस्वर्णकटिज्योतिः-
संवलितं किं लक्ष्मीकांत विचार्य वद । ३ । १ । १ ।
विचार्योक्ता तामरसं त्वन्नयनचरणशयस्य समं न
प्रतप्तघृष्टसमीचीनं स्वर्ण त्वच्छ्रीविग्रहकांतेः समं न

उपमानमुक्काऽयं लोकस्त्वां स्तौतीति सर्वमत्यंतं प्रायेण
प्राप्तोक्तिरूपं फलवत्येव सूचयति परं ज्योतिः । ३ ।
१ । २ । परंज्योतिस्त्वं परंभवत्त्वां विहाय पश्चाद-
न्यस्य कस्यापि परंज्योतिषोऽभावेनोपमानरहित-
तया वर्त्तमानं परंज्योतिस्त्वदंतर्व्याप्तं लोकं सृष्टवन्म-
दीयपरंज्योतिर्गोविंदप्रकारं वक्तुं न शक्नोमि । ३ ।
१ । ३ । असमर्थायां सत्यामप्येतत्कुसुमशिरसि महा-
भूम्यां त्वन्मधुपूर्णकुसुमसदृशश्रीविग्रहे मनो निवेशयतु-
मसमर्थबहुसमयमतिमदाः विकस्वरतुलसीविषये त्वं
मनो निवेशितवानसि महापृथिवी न क्लिश्येत् । ३
। १ । ४ । अक्लेशमागच्छेत्तपःफलं विकस्वरकि-
रणतेजोविग्रहो भूत्वाऽक्लेशज्ञानो मर्यादां विना
सर्वं व्याप्तवानसि भविष्यत्कालवर्त्तमानकालभू-
तकालो भूत्वा लोकमेकरूपतया रक्षसि गुणान्
कार्त्स्न्येन कथं वदानि । ३ । १ । ५ । अध्येतॄणां
स्वाध्यायाः सर्वे यावत्सु लोकेषु यावत्प्रकाराश्च साधु-
त्वद्गुणस्पृशो नान्यत्र गच्छंति कुसुमशोभमानक्षेत्र-
तुलसीकिरीटपुष्पालयांगनाधिष्ठितवक्षस्क किमुक्काहं
स्तवानि ३ । १ । ६ । स्तोतारो बहवः स्युस्त्वदंतश्चतुर्मुखं
व्याप्तजललोकान्सर्वान् सृजेति प्रथमं सृष्टवानसि
अतिशयितगुणहरादिप्रवृद्धदेवा उद्युक्ताः परिवार्यामरा-



स्तुवंति चेत्त्वदनादिगुणा मालिन्यं न प्राप्नुयुः किम् ।
३ । १ । ७ । निर्मलतेजोविग्रहो विकासरहितः संको-
चरहितो निर्मलज्ञानः सर्वात्मा सर्वं व्याप्तवानसि
निर्मलापरिमितभूषणवदमरस्वामी मार्गं प्राप्तश्चेन्निर्म-
लत्वत्पादकुसुमज्योतिर्मालिन्यं न प्राप्नुयात्किम् ।
३ । १ । ८ । अकुंठिततीक्ष्णाग्रचक्रसुदक्षिणो नमदनु-
रागगजं रिरक्षयिषुः पतत्रिणं संचार्य्याविर्भूतोसि अकुं-
ठितज्ञानैकोपकरणो • विकस्वरलोके आश्रितजनान्
रक्षसि चेत्त्वदुज्ज्वलतेजस्तिरोहितं न भवेत्किम् ।
३ । १ । ९ । वेदरूपचतुर्वेदांतःस्थितविकस्वरतेजःक्रमेणै-
तान् लोकान्सर्वान्सृष्ट्वोद्धृत्य निगीर्योद्गीर्याक्रांतवानसि
चंद्रकलारूढजटे चतुर्मुखे इंद्रे च स्वामित्वं ज्ञात्वा
स्तुवत्सु वैलक्षण्येनावस्थानं विस्मयः किम् ।३।१।१०।
आश्चर्यानाश्चर्य्यं यथार्थज्ञानवेदवेद्यं जयकीर्त्तिमद्वृद्धवृ-
द्धिस्थानं विशाल कुरुकापुरीशठकोपेन अन्यथाज्ञानं
विना प्रणम्य प्रणीते सहस्र एतद्दशकमुज्जीव्य जन्म
च्छिद्याच्छब्दायमानत्रिविधजलभूम्याम् । ३ । १ ।११।

श्रीदिव्यसूरिचरणावेव शरणम् ।

आद्ये तृतीयशतकस्य वनाद्रिभर्तु-
रापादमौल्यवयवाभरणाभिरूप्यम् ।
ब्रह्मादिवागविषयं च महाप्रभावं
सौन्दर्यमस्महृदयश्शठजिच्छशंस ॥ २१ ॥

सुश्लिष्टाकल्पमङ्गैरनुपमसुषमं वक्त्रनिस्सीमदीप्तं
स्वान्तस्वादुस्वदेहं सुखभजनपदं मण्डिताङ्गं महिष्या ।
स्तोत्रातिकान्तकीर्तिं मलिनिमरहितौज्ज्वल्यमिष्टोपवाहं
गीताश्चर्यैस्त्रिणेत्रप्रभृतिसुरनुतिं चित्रसौन्दर्यविद्मम् ॥ २४ ॥

---

## द्वितीय त्रिविधजलभूमिदशकम् ।



त्रिविधजलभूमिमुत्पादयन्मन्मेघवर्ण तद्दिने त्वद्दत्तस्य शरीरस्य मार्गे भ्रमामि क्रूरदिनव्याधिनिवृत्तये पापानि निर्मूलं विद्राव्य कदा वाहं त्वामितः परमागत्य प्राप्स्यामि । ३ । २ । १ । बलवन्महाभूमिमाक्रांतवन्मद्रामन त्वद्बहुमहामाया बहुजन्मसु प्रविशन्नहमनादिमहाप्रबलपापानुबन्धान्समूलं च्छित्त्वा त्वन्महाचरणौ प्राप्य तिष्ठेयं कस्मिन् काले । ३ । २ । २ । हननासाधनास्वदंडं हननं कृत्वा भारतयुद्धे सर्वं सैन्यं महाभूमौ शमयन् मत्स्वामिन् क्रूरशरीरसंबद्धपापानि छिद्यमानानि न छिद्यंते वद मया त्वां प्राप्तुमेकमुपायम् । ३ । २ । ३ । आवृतज्ञानानां सुतेजोरूप सर्वदा विकाससंकोचौ विना सर्वत्र पूर्ण मत्स्वामिन् नैच्यमन्यत्र सर्वत्र हित्वा त्वच्चरणयुगलस्याधःसंपदमहं प्राप्तुं प्रकारमनुगृहाणागत्य । ३ । २ । ४ । आगत इवागत्यापि मन्मनसि त्वमशैथिल्यं न करोपीदमेवेदं स्याच्चेद्बृच्छपूर्णातसीस्निग्धकुसुमश्रीवर्ण मत्स्वामिन्नहं त्वां क्वागत्याभिगच्छामि । ३ । २ । ५ । कुर्यां न कुर्यामिति नावोचं पूर्वकालेऽल्पसारांतानास्वाद्य दूरेऽभवं नानाबहुसहस्रं प्राणिनः सृष्टवन्परम त्वत्समीचीनस्वर्णज्योतिश्चरणौ प्राप्नुयां कदा । ३ । २ । ६ । सदा वयं स्थित्वास्थित्वादुःखित्वा चेतः सत्यज्ञानमंतरा पापजन्मसु मग्नाः सर्वदा सर्वत्राविच्छेदं पूर्णतया स्थितं सत्यज्ञानज्योतिः कृष्णं प्राप्स्यामः किम् । ३ । २ । ७ । आश्रितदुःखपापानि न मोचितवान् विच्छेदमंतरा त्वच्चरणौ न ध्यातवान् व्याप्तानादिगुण कृष्ण मत्परंज्योतिराक्रंदामि दिदृक्षमाणोऽहं कुत्र प्राप्तुमाक्रंदामि । ३ । २ । ८ । आक्रुश्याक्रुश्य घोरपापवनगुहायां स्थित्वा पापिष्ठोऽहं बहुकालं मार्गे विमुह्य व्याकुलो भवामि सादरं तदा गोसमूहं रक्षितवंतं लोकान्सर्वान् क्रांतवंतं स्वामिनं कुत्रेतःपरमभिगच्छामि । ३ । २ । ९ । प्रान्तिकाले यमभटानां पाशे विमुक्ते व्याकुलतारूप तत्क्लेशान्सर्वान्दूरीकर्त्तुं नानाशास्त्रज्ञानं मत्कृष्ण दृष्ट्वा स्थैर्यं प्राप्य मच्चेतः प्राप दैर्घ्यमात्मा । ३।२।१० । आत्मनां सर्वेषां लोकानां स्वामिनं कोकिलाक्रांतोद्यानदक्षिणकुरुकापुरीशठकोपस्य दोषरहितशब्दस्वरमा-

लासहस्र एतद्दशकमात्मनि शरीरं मांसमयं निवर्त्तयेत् । ३ । २ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

संकोचितस्वकरणस्स हरिं यथेष्टं
भुङ्क्ते न चाहमिति भिन्नमतिश्शठारिः ।
आश्वासितश्च हरिणा स्वमहत्तयैव
भोगेष्वसक्तिरिति तत्कथितं द्वितीये ॥ २२ ॥

घ्रष्टाकान्ता च लोकान्हृतधरणिभरोनन्यभोग्याङ्घ्रियुग्म-
श्रितांघ्रीलरूपो निरवधिरसदस्वांघ्रिरध्यक्षमूर्त्तिः ।
नित्योपास्यस्वपादो निखिलवसुमतीगोपनस्वांघ्रिवृत्ति-
र्मुष्णन्मूर्तिप्रतीत्या यमपरवशतां प्रैक्षि लोकैकनाथः ॥ २५ ॥

---

## तृतीयमवधिशून्यकालदशकम् ।

अवधिशून्यकालं सर्वं सहचारी स्थित्वाऽप्रच्युतिकैंकर्यं कर्तुं वाञ्छामो वयं महाध्वनिनिर्झरे श्रीवेंकटे सौंदर्यशालिरज्योतिषो मत्स्वामिनो नाथनाथस्य । ३ । ३ । १ । मत्पितृपितृपितृपितृपितुश्च पूर्वो दिविषद्भिर्दिविषन्नायकेन सह विकीर्णपुष्पविकाशकश्रीवेंकटेऽनंतगुणो मेघसुन्दरः स्वामी । ३ । ३ । २ । स्वामी माल्याभरणशालिरक्ततामरसनयनो रक्तफलाधरो नीलरत्नं प्रसन्नपूर्णपर्वतह्रदनीरश्रीवेंकटे संख्या-



शून्यानादिगुणो दिविषदीशः । ३ । ३ । ३ । ईशो दिविषदामिति वदामीत्युक्तौ तत्तेजः किं श्रीवेंकटवतः नीचः किंचित्पूर्त्तिशून्ये मयि पाशं स्थापितवतः परमप्रभज्योतिषः ।३। ३ ।४ । ज्योतीरूपः सर्वलोकसेव्यः आदिमूर्त्तिरित्युक्तावुत्कर्षो भवति किं वैदिकानां सकलवेदामृतं दोषरहितगुणश्रीवेंकटवंतम् । ३ । ३ । ५ । दह्येरन्नृणानि ते सत्यमुपर्य्युपरि पापानि सर्वाणि स्वयं स्वेषां समीचीनमेव कुर्युः वेंकटवासिने नम इति रूपं सुष्ठु प्राप्तं तद्वहताम् । ३ । ३ । ६ । वहंतो महापुष्पं जलं तेजो धूपमादाय सादरं दिविषदो दिविषन्नायकेन प्रणम्य वर्द्धन्ते श्रीवेंकटोऽस्माकं समशालिमोक्षं दद्याद्विशालपर्वत एव ३।३।७। पर्वतमादाय शीतवर्षाद्रक्षितवतस्तदा भूमिमाक्रांतवत उपकारकस्य परस्य आगत्याश्रयणीये श्रीवेंकटमहापर्वत एकस्मिन्नेव सेवितेऽस्माकं पापानि नश्येरन् ।३।३।८। नश्येज्जराजन्ममरणं च व्याधिनाशप्रकारं कुर्वंच्छ्रीवेंकटगोपकालोन्मीलदंघ्रितामरसं वाचि मनसि च निवेशयताम् । ३ । ३ । ९ । कलत्रकालावधिं सन्निहितं प्राप्य कृशकार्श्यात्प्रागाश्रयत विस्तृतफणफणिशयनस्य श्रीवेङ्कटस्य निबिडोद्यानं निबिडतामरसतटाकनितंबम् । ३ । ३ । १० । पादं प्रसार्य भूमिमाक्रांतवंतं स्वामिनं दीर्घोद्यानकुरुकापुरी-

शठकोपोक्तेऽसदृश सहस्र एतद्दशकं समर्था सुखयंति श्रियं प्राप्य भूमौ श्लाघ्याः । ३ । ३ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

सवत्र सर्वसमये सकलास्ववस्था-
स्वभ्यर्थयन्निखिलदास्यरसान्मुनीन्द्रः ।
श्रीवेंकटाद्रिनिलयस्य परस्य पुंसो
निस्सीमशीलगुणमप्यवदत्तृतीये ॥ २३ ॥
स्थानोत्कर्षात्सुदीप्तं श्रमहरवपुषं स्वांगपर्याप्तभूषं
तेजिष्ठं नीचयोगात्प्रणमितभुवनं पावनं सन्नतानाम् ।
प्राप्यर्हस्थानमंहःप्रशमनविषयं वन्धविच्छेदिपादं
भेजे शीघ्राभियानक्षमशुभवसतिं लंभितार्चाभिमुख्यम् ॥ २६ ॥

---

## चतुर्थमभिष्टुतसमीचीनदशकम् ।

अभिष्टुतसमीचीनाद्वितीय इति किं वदामि सदृश-रहितगुणभूमिरिति किं वदामि प्रकाशमानशीतलसागर इति वदामि किमग्निरिति वदामि वायुरिति वदामि व्याप्ताकाश इति वदामि किं दीर्घप्रभतेजोद्वयमिति वदामि त्यागरहितमिदं सर्वमिति वदामि कृष्णस्याह्वा-नप्रकारः कः । ३ । ४ । १ । आह्वानप्रकारं ज्ञातुं न शक्नोमि पर्वताः सर्वे इति वदामि अभिलषणीयगुण-वर्षमिति वदामि प्रकाशमानास्तारका इति वदामि



जिह्वयाऽभ्यस्यमानाः काला इति वदामि ज्ञानस्य समीचीनप्राण इति वदामि व्याप्तगुणकृष्णस्य मत्स्वा-मिनः पंकजनयनस्य । ३ । ४ । २ । पंकजनयन इति वदामि प्रवालरक्ताधर इति वदामि सुंदरकिर-णचरण इति वदामि अंजनवर्ण इति वदामि रक्तकिर-णकिरीट इति वदामि श्रीश्रीवत्सवक्षा इति वदामि शंखचक्रवानिति वदामि जातिमाणिक्यम् । ३ । ४ । ३ । जातिमाणिक्यमिति वदामि छविशालिस्वर्ण-मुक्तेति वदामि जातिसमीचीनवज्रमिति वदामि विच्छेदरहितसुंदरदीप इति वदामि आदिसुंदरज्योति-रिति वदामि आदिसुंदरपुरुष इति वदामि कस्याप्यभा-वकाले स्थितं पितरमच्युतं निर्मलम् । ३ । ४ । ४ । अच्युतोऽमल इति वदामि दासजनपापनिवर्त्तकाशा-स्यमहौषधमिति वदामि समीचीनसमुद्रामृतमिति वदामि तद्रसखंड इति वदामि षड्रसौदन इति वदामि घृतरसमध्विति वदामि फलमिति वदामि पय इति वदामि । ३ । ४ । ५ । पय इति वदामि चतुर्वेदफल-मिति वदामि समयन्यायशास्त्रमिति वदामि व्यामो-हयच्छ्रवणगानमिति वदामि एतेषु समीचीनमतिशयित-मिति वदामि कर्मातिशायिफलमिति वदामि कृष्ण इति वदामि व्यामोहवानिति वदामि मायीति वदामि

दिविषदामादिम् । ३ । ४ । ६ । दिविषदादिरिति वदामि दिविषद्देव इति वदामि दिविषद्भोग इति वदामि दिविषदां सर्वमिति वदामि अन्यूनैश्वर्यमिति वदामि अन्यूनस्वर्ग इति वदामि अन्यूनमोक्ष इति वदाम्युज्ज्वलमणिवर्णम् । ३ । ४ । ७ । उज्ज्वलमणिवर्ण इति वदामि एक इति स्तुत्यतया स्थितशीतलचन्द्रजटावानिति वदामि चतुर्मुखदेव इति वदामि रक्षणप्रीतिमंतं लोकान्सर्वान्सृष्ट्वा तैः स्तूयमानतया स्थितं मधुमत्कुसुमतुलसीकमस्मत्स्वामिनं कृष्णं मायिनम् । ३ । ४ । ८ । कृष्णं मायिनं समुद्रं मथित्वाऽमृतं स्वीकृतवंतं स्वामिनमच्युतमनंतमनंतोमर्युपसमर्प्य सम्यक्कच्छयानं भूमिं निर्गीर्योद्गीर्णवन्तं व्यामोहशालिनं चिंतयितुमुपायं ज्ञातुं न शक्नोमि यावद्यावांश्च स्वयमेव । ३ । ४ । ९ । यावद्यावांश्च स्वयमेव भवंस्तेषांतेषां प्रतिसमयं संबंधशून्य इंद्रियपंचकस्य वक्तुमशक्यो ज्ञानमूर्त्तिः प्राणसंयुक्तात्मनि विद्यमानैर्यावद्भिः किंचित्संबंधशून्यो भावनां प्राप्नोति चेत् तमपि प्राप्नुयात् । ३ । ४ । १० । संघीभूतभ्रमरनादितशीतलमालामेघसदृशवर्णं समीपे विकस्वरोद्यानकुरुकायुदारशठकोपोक्ते गानयुक्ताद्वितीयसहस्र एतद्द्वितीयदशकाभ्यासशक्ता विच्छेदशून्यभोगं प्राप्याद्रियंतेऽमरैर्निबिडैः । ३ । ४ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।



सर्वं जगत्समवलोक्य विभोश्शरीरं
तद्वाचिनश्च सकलानपि शब्दराशीन् ।
तान्भूतभौतिकमुखान्कथयन्पदार्था-
न्दास्यं चकार वचसैव मुनिश्चतुर्थे ॥ २४ ॥

भूतैस्तत्कार्यभूतैश्शुभनिजवपुषा दीप्तिमद्भिः पदार्थैः
पथ्यास्वादोपपन्नैश्श्रुतिमुखसुभगाशेषशब्दप्रपंचैः ।
नानाकारैः पुमर्थैर्जगदधिपतिभिश्चेतनाचेतनौघै-
र्जुष्टं दोषैरदुष्टं निखिलतनुतया संप्रतुष्टाव तुष्टः ॥ २७ ॥

---

# पंचमं निबिडमहापुष्पितदशकम् ।

निबिडमहापुष्पितोद्याने सरसि ग्राहेण बंदीकृतस्य स्थितस्य हस्तिनः कृपां कृतवंतं कालमेघवर्णं कृष्णमस्मत्स्वामिनमुक्त्वा गीत्वोत्थायोड्डीय ससंभ्रमं नृत्यं न कुर्वंति ये तैः कर्म किं वदत शीतलसमुद्रपरिवृतभूमिस्थाः । ३ । ५ । १ । शीतलसमुद्रावृतस्थान्स्वेषां भक्ष्यतया हिंसित्वा भुंजानानां दृढकटकचरणासुराणाममंगलं विचारयंतं लक्ष्मीवल्लभं रागाद्यथा शीर्षं प्राप्नुयुस्तथा गीत्वोड्डीय नम्रीभूयाऽसंचरंतो मृच्छालिलोक उत्पद्यंते प्रबलपापैर्बाधायै प्रवृद्धैः । ३ । ५ । २ । पर्वतमुद्धृत्य पाषाणवर्षं निरुध्य गोसमूहस्य विनाशं निर्वर्त्तितवंतमुपकारकमुक्त्वोच्चा स्थित्वा सर्वदा शीर्षा-

सनसंबंधं व्यत्यस्तभ्रमणं प्राप्यातुड्डीयमानास्तरंगशालिनरके मग्नाः स्थित्वा संचरंतो नव्याः । ३ । ५ । ३ । परिमलप्रसारिमालायै महत ऋषभान्सप्त च पीडितवतो रक्तप्रवालसमुदायाधरस्य श्रीधरस्यानादिगुणं गीत्वा प्रणम्य नाट्यं कृत्वा नर्त्तित्वाऽक्रमशिरश्चालनं भुक्ता संचरंतः स्वजन्मना फलं किं साधुजनमध्ये । ३ । ५।४ । साधुजनबाधककंसस्य साधनार्थमादिसुंदरज्योतीरूपं तत्रावस्थाप्यात्र जातं वेदमूलं गीत्वा प्रतिवीथ्यक्रमेण नृत्यन्तोऽधीत्य ज्ञानवत आरभ्य किं जपेयुस्ते मनुष्याः किम् । ३ । ५ । ५ । मनुष्या अन्ये सर्वे च भूत्वा मायाजन्मकृतवंतमद्वितीयं जन्मशून्यं विशालसमुद्रशायिनमुपकारकं फलमिक्षुरसं खंडं मध्वमृतं मौन्यं विना स्तुत्वा नत्यंतः सर्वज्ञानस्वभावाः । ३ । ५ । ६ । स्वभावरहितशतनाशाय पंचानां कृपां कृत्वा स्थित्वा भूमावभिवृद्धसेनां निर्वापितवन्तं परंज्योतिः स्मृत्वा नर्त्तित्वा जलस्राविनेत्राश्चित्ते द्रुताः शिथिला ये न भवंति ते मांसलवृद्धोन्नतस्थूला उत्तमानां किं कुर्युः । ३ । ५ । ७ । प्रवहज्जलसुन्दरशीतलजलनिर्झरोत्तरवेंकटे मत्स्वामिनो नामानि बहून्युक्ता प्रलप्योन्मत्त इत्येव परेषु वदत्सु ग्रामेषु बहुषु प्रविश्याप्रविश्य लोकेषु हसत्सु स्थित्वा नर्त्तित्वाऽभिनिवेशं वर्द्धयित्वा नृत्य-



न्तोऽमरसेव्याः । ३ । ५ । ८ । अमरसेव्यं सर्वलोकस्वामिनं सुप्रतिष्ठितं मनसि योगं प्राप्य तेन सहैकतया सम्यक्साहसं कर्तुं शक्तान् विहायान्येषां सर्वेषां मनसि सुप्रतिष्ठमनुसंधायोत्प्लुत्य नर्त्तित्वा प्रलपनमेव कर्म । ३ । ५ । ९ । कर्म कर्मफलं च भवन्तं कारणं श्रीमणिवर्णवंतं रक्तनयनस्वामिनं देवोपकारकमेकरूपेण मनसि निधाय मनसि द्रुता उत्थाय नर्त्तित्वा महत्त्वं लज्जां च विहाय प्रलपताज्ञानं निवर्त्य । ३ । ५ । १० । निवृत्तान् दासान् शिक्षित्वा कैंकर्यं कारयितुं समर्थं पूर्णगुणमच्युतममरस्वामिनं मत्स्वामिनमवगाहमानमहाकेदारावृतशीतलमहाकुरुकापुरीशठकोपेन सायासं प्रणीते सहस्र एतद्दशकं प्रबलपापानि भस्मीकुर्य्यात् । ३ । ५ । ११

श्रीदिव्यसूरिचरणावेव शरणम् ।

पूर्वेण दास्यविधिना पुरुषार्थसीम्ना
हर्षप्रकर्षविवशः खलु पंचमे सः ।
आनन्दनैरविकृतान्विनिनिन्द मूर्खा-
न्धौरेर्गुणैस्तु विकृतान्प्रशशंस भूयः ॥ २९ ॥

ग्राहग्रस्तेभमोक्षे सुररिपुदमने गोकुलत्राणकार्ये
गोदार्थोक्षावमर्दे सदहितमथने सिंधुपर्यंकयोगे ।
क्षोणीभारव्यपोहे क्षितिधरवसतौ निर्जराराध्यतायां
विश्वारंभे च शौरेरशुभतनुसुपमोन्मादकत्वं जगाद ॥ २८ ॥

---

# षष्ठं रक्ततामरसनयनदशकम् ।

रक्ततामरसनयनः सन् लोकान् सप्त च भक्षितवानेव भूमिराकाशो मनुष्या देवा अन्यदन्यदन्यत्सर्वं भूत्वा ऋजुव्याप्तप्रभञ्जानमाविर्भूयैतत्सृष्टवान् पुनर्नैविडचशालितेजसा सह भवन्नद्वितीयत्रिरूपमूर्तिः । ३ । ६ । १ । त्रिरूपमूर्तिः प्रथमत्रयाणां मूलं शापानां विद्यमानानां निवर्त्तकं विशालसमुद्रशायिनं देवदेवं दक्षिणलंकां दहनविजृंभणं संहरद्धनुर्द्धरं पापनाशनं पंकजविशालनयनमक्रमं स्तुवंतु।३।६।२। अक्रमेण दिविषद्भिस्तूयमानतया स्थितं परमं परंज्योतिर्हस्तसंमेलननृत्यवंतं भव्यं मणिवर्णं कुम्भनर्त्तकं फणिनमारुह्य तरंगितसमुद्रे सम्यङ् निद्रां स्वीकृतवंतं स्वामिनं रात्रौ समीचीने दिवसे निरंतरं सर्वदा स्तोतुं मनो निवेशयत । ३ । ६ । ३ । निवेशयत युष्मन्मनसीति मयोच्यमानस्य मायिनो गुणोऽस्मादृशामुक्तिः का तिष्ठतु प्रत्यहं दिविषदामीशिता चतुर्मुखो जटासिराः स्वामी चार्जवेन तत्पादपंकजं ध्यात्वा स्तुत्वा संचरंति । ३ । ६ । ४ । संचरता वायुना सह विपुलाकाशः कठिना भूमिरवस्थितः सागरोज्ज्वलताऽग्निना सहोभे तेजसी देवा अन्यद-



न्यत्सर्वात्मभूतस्य श्यामलविग्रहस्य रक्ततामरसनयनस्य कृष्णस्य दिविषन्नायकस्य वक्रबहुनीलकेशस्यास्मत्तेजःकिरीटस्वामिन आविर्भावः । ३ । ६ । ५ । जन्मनाशशून्यस्तद्वांस्तादृश एकमूर्त्तिः सन् कोपेन सह कृपां प्राप्तवांश्चरणयोरधो यथा प्रविशेत्तथा स्थितः रक्तनयनं महांतं गन्धरूपरसशब्दस्पर्शरूपतया स्थितं मद्दिविषदृषभं विहायान्येन शून्यः सर्वकालं च । ३ । ६ । ६ । सर्वकाले मत्प्राणस्य भोग्याभूतं मदीयपूर्णात्मानं निबिडकांतिमज्ज्योतिर्मणिवर्णं कुम्भनर्त्तकं श्रीमदमरैर्मुनिभिर्निगीर्यमाणेक्षुफलमाश्रयत परिशुद्धमनस्काः क्षणमपि न तिष्ठेयुर्दुःखानि ३ । ६ । ७ । दुःखमात्रोत्पादकसदसत्कर्मभूतं तद्रहितं उच्चैःस्थितमेकं ज्योतिः लोकान्सप्त निगीर्योद्गीर्णवन्तं मोहहेत्वाकर्षणकर्तृयमभटानां क्रूरविपमच्युतं दशरथस्य सुतं तं विनान्यशरणवान्नास्मि । ३ । ६ । ८ । शरणभूतः पिता मात्रा सह स्वयमपि भूत्वा तद्व्यतिरिक्तो भूत्वा संकोचरहितामरकुलमूलं त्रयाणामंतरादिं भीत्या यूयं लोकस्थाः सोयमिति संशयं मा कुरुत मनसा चिंत्यमानो यः स भवेन्महासमुद्रवर्णः । ३ । ६ । ९ । समुद्रवर्णः कृष्णो दिविषन्नीलरत्नं मम व्याप्तप्राणः फणवदुरगशयने शयानः परंज्योतिः पूर्वं शतस्य हिंसि-

तुमागच्छंतीं सेनां हिंसितुं पंचार्थं क्रूरसमरे तदा रथा-वर्त्तकः स्वामी शब्दायमानचरणौ द्रक्ष्यतः कदा नयने ३ । ६ । १० । चक्षुषा द्रष्टुमशक्यं मनसः सम्यक सुलभं मृच्छालिलोकस्थप्राणिनां सर्वेषां कृपां कुर्वंतं दिविषदीशं गानशाल्युद्यानवलुतिदेशवता कुरुकापुरी-शठकोपेनोक्ते रागशालिसहस्र एतद्दशकेन भक्तत्वेन भवनं सुघटतेऽभ्यस्यंतु । ३ । ६ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

तान्निन्दितानपि विहातुमसावशक्तः
शौरेर्दुरासदतया विमुखान्विचार्य ।
अर्चावतारसुलभत्वमुवाच तेषा-
मेवं च तेषु विमुखेषु शुशोच षष्ठे ॥ २६ ॥

पद्माक्षीं पापहन्त्रीं मणिरुचिममराधीशचिंत्यांङ्घ्रिपद्मां
तत्तादृक्कुन्तलश्रीसुघटितमुकुटां भावुकप्राप्यपादाम् ।
शुद्धास्वाद्यस्वभावां यमभटमथनीं भक्तधीवृत्तिभव्यां
नीचोच्चाभीष्टवृत्तिं हरितनुमवदन्निर्मलार्चानुरक्तः ॥ २९ ॥

---

## सप्तममभिवर्द्धमानप्रभावदशकम्



अभिवर्द्धमानप्रभावतेजोमूर्त्तिं पंकजनेत्रमभ्यासे भोग्यमस्मत्क्षीरसमुद्रशायिनं परमभ्यसितुं भाग्यवंतो ये केचन त एव प्रत्यभ्यस्यमानजन्मम ध्येस्मान्नियम-



यन्तः परमाः । ३ । ७ । १ । नियमयन्तं परमं कृष्णं चक्रवदुपकारकं अद्वितीयचतुर्भुजं परिशुद्धमणिवर्ण-मस्मत्स्वामिनं पादौ विशालौ हस्तौ च प्रसार्य नम-स्यंति ये त एव सर्वदा प्रतिजन्मावकाशमस्मद्दासका नाथाः । ३ । ७ । २ । नाथं भूम्याचाकाशेन च स्तूयमा-नसुगन्धितुलसीकुसुमं स्वर्णदीर्घचक्रं मम पितरमुपका-रकं पादयोर्नंतुं समर्थान् ये नमस्यंति त एवाधीय-मानजन्मावकाशेषु सर्वेष्वस्मद्दासकाः । ३ । ७ । ३ । कटिव्याप्तांबरस्य कण्ठिकावतः कटिसूत्रवतः पार्श्व-व्याप्तसुवर्णसूत्रस्य सुवर्णकिरीटस्यान्यबह्वाऽऽभरणस्व-भाववतः श्रीनारायणस्य भक्तानां भक्ताः खलु मध्य-व्याप्तजन्मावकाशेषु सर्वेष्वस्माकमस्मत्स्वामिनः । ३ । ७ । ४ । महापुरुषाणां सत्तामसाधारणस्वामिनोऽमराणां प्रयासविनाशाय तदा पूर्णामृतं प्राशयितवतः पितुर्मा-हात्म्यं प्रलपितुं समर्थान् प्रलपंतः खलु भविष्यत्तस्मिंश्च जन्मन्यस्मद्रक्षकाः स्वामिनः । ३ । ७ । ५ । रक्षकं परमं कृष्णं सुदर्शनोपकारकं मधुस्यंदिसुगन्धिमालं परिशु-द्धमणिवर्णमस्मत्स्वामिनं प्रभाशालिज्योतिर्मनसि निवे-शयंति ये त एवानादरमंतरा दासान् कृत्वाऽस्माञ्जन्म-जन्मांतरेभ्यो रक्षेयुः । ३ । ७ । ६ । जन्मजन्मांत-रेभ्यो रक्षित्वा दासान्नीत्वा गुणान्वर्द्धयित्वा स्वचरण

युगलस्याधः स्वीकुर्वतः पितुः प्राचीनान्प्रलपितुं समर्थान् ये प्रलपंति त एव सामीचीन्यं प्राप्यास्मान्सर्वदोज्जीवयितारो विश्वसनीयाः ।३। ७ ।७ । विश्वसनीयं भूमिं सृष्टवंतं श्रीवक्षसमुपरि केषामपि ज्ञातुमशक्यं कुम्भीनरकस्था अपि स्तुवंति चेत्त एवास्माकं नानाजन्मसु प्रत्यवकाशमस्मन्नंतव्यकुलाः स्वयमेव ।३।७।८। कुलधारिणीर्जातयश्चत्तस्रोऽधोऽधो यावद्भिरपि सामीचीन्यै रहिताश्चग्डालचण्डाला अपि भवंतु दक्षिणधृतचक्रस्य स्वामिनो मणिवर्णस्य दासा इत्यंतर्मिलितानां दासानां दासा अस्मत्स्वामिनः।३। ७।९। पादव्याप्तं लोकं भुक्त्वा वटदले आहारवशं कुर्वाणस्य सदृशेन केनापि शून्यस्य शिशुस्वभाववतोऽस्मत्स्वामिन उपकारकस्य दासदासस्वदासदासस्वदासदासस्वदासदासा वयम्। ३ । ७ । १० । मूलाभिवृद्धशत्रुनाशाय तदा पंचानां कृपां कृतवंतं महापुरुषं सुंदरकुरुकापुरीशठकोपस्य संनिहिते कैंकर्ये पादपूर्णे सहस्र एतद्दशकं तद्भक्तविषये समाप्तं सम्यगभ्यसितुं शक्ताश्चजन्मकर्तृत्वाभावः सिद्धचेत्।३।७। ११।

श्रीदिव्यसूरिचरणावेव शरणम् ।

तच्छोकशांतिविधये हरिणा प्रसादा-

दाविष्कृतान्स्वगुणचेष्टितभोगशीलान् ।



आलोक्य वैष्णवजनान्मुनिरात्मनाथा-

नाख्याय तानतिजहर्ष च सप्तमे सः ॥ २७ ॥

स्फीता लोकातिभूम्ना पृथुबहुभुजया दिव्यमाल्यास्रभाजा

सद्वस्त्राकल्पक्लृप्त्या त्रिदशरसकृता रक्षणौन्मुख्यवत्या ।

मुक्तैरुत्तंसितांघ्र्या स्थिरधृतरमया शामया नित्यसत्या

शौरेः कांत्या जितानां स्वबहुमतजनस्वामितामन्वमंस्त ॥३०॥

---

# अष्टमं किरीटिन्दशकम् ।



किरीटिंस्त्रिलोक्या नंत्वा स्तूयमानगुणांघ्रे अगाधसमुद्रमथन पक्षिवाहनध्वज मेघमर्णांडांतर्वर्त्युपरितनोत्कृष्टेति तिष्ठति मम चेतः। ३ । ८ । १ । मन एव दीर्घनगरं कृत्वा स्थितवन्मम शरण दृढलंकानायकघ्नविषभूमिजिघृक्षया वामनीभूतवंचकेति वदति सर्वदा मम वाक्। ३।८।२ । वाचैव स्तोतुं कृपां कुर्वद्दिविषन्नायक कालोद्यद्बालचंद्रकांतिप्रकाश्यवंशगृहेषु क्षीरनवनीते चौर्येण भुक्तवन् गोगोप मातरिति परामृशतो मम हस्तौ । ३ । ८ । ३ । हस्ताभ्यां सम्यक् प्रणम्य प्रणम्य त्वां सर्वदा क्षणकालमपि किंचिद्विच्छेदं विना फणशालिसर्पं आरुह्य शयानं परं त्वां यथार्थतया द्रष्टुमाद्रियेते मम चक्षुषी । ३ । ८ । ४ । चक्षुर्भ्यां द्रष्टुमागमिष्यतीत्याशया भूमिं स्वीकृतवतो वामनस्यारोहणहर्षेण भ्रमदलंकारशालिपक्षिपक्षशब्दं संभाव्य

निश्चयार्थं विचारयेते स्थित्वा मम श्रोत्रे । ३ । ८ ।
५ । श्रोत्राभ्यां सम्यक् त्वत्कीर्त्तिफलकाव्यानि काल-
रागाणि मधूनि सम्यक् भुक्त्वा भूम्युपरि स्वर्णदीर्घ-
चक्रधरं त्वामेव निरन्तरमाद्रियते मम प्राणः । ३ । ८ ।
६ । प्राणपूर्णामृतवद्दासवत्पक्षसुन्दरपक्षिन् तेजश्चक्र-
पाणिनो हृदये व्याकुले बहुकालमाकुश्यापि द्रष्टुं न
लेभे त्वदलंकारम् । ३ । ८ । ७ । अलंकारतामरसन-
यनेकांजननील स्थित्वा मत्प्राणं बाधमानशीलातीत-
भविष्यद्वर्त्तमानकाल त्वां कदा द्रक्ष्यामि । ३ । ८ । ८ ।
प्रतिगृह्णामि महाबले त्रीणि पदानि देहीत्युक्तवन्
वंचक कंसं वंचयित्वा बाणस्यांतर्बलविनाशायाद्विती-
यसहस्रभुजच्छेदिन् पक्षिसिक्त त्वां कदा पुनः प्राप्स्यामि
। ३ । ८ । ९ । निबिडमहार्ज्जुनमध्ये गतवन्नस्मन्महा-
प्रभाव त्वच्चरणदर्शनाशोऽज्ञानं प्राप्य प्रयासेनाहं
स्तोत्रमालां गृहीत्वा त्वामासित्वाऽऽसित्वा कियत्का-
लमाक्रंदामि । ३ । ८ । १० । श्लाघनीयगुणं भूमिमा-
क्रांतवंतं स्वामिनं सामीचीन्यशालिगुणसमीचीनकुरु-
कापुरीशठकोपेनोक्ते बलवत्सहस्र एतदेकदशस्य विद्यो-
तमानाकाशं यावंत आरोहेयुरुक्त्या । ३ । ८ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

षष्ठे बहिर्नयनतो हरिमाप्तुमाशा
जाता मुनेरथ तदीयजनावलोकात् ।



उत्तंभिता स्वकरणैरपि कामयंती
शोकातिरेकजननी पुनरष्टमेऽभूत् ॥ २८ ॥
चित्ताकृष्टिप्रवीणैरभिलपनसुखैस्स्पर्शवांछान्दुहानै-
रातन्वानैर्दिदृक्षां श्रुतिहितसहितैरात्मनित्यादराहैः ।
विश्लेषाक्रोशकृद्भिस्स्मरदरतिकरैर्दत्तसायुज्यसंगैः
कुर्वाणैर्वाललौल्यं मिलितगुणगणैर्नित्यदृश्यागमाह ॥ ३१ ॥

---

## नवममभिधाने विरोधदशकम् ।



अभिधाने विरोधोऽस्या तथापि वदानि शृण्वन्तु
मज्जिह्वायां भोग्यं काव्यमहं कस्मा अपि न प्रयच्छामि
तेन्नातेना इति भ्रमरैरुद्घुष्यमाणश्रीवेंकटे मद्व्रजे मत्पि-
तरि मत्स्वामिनि सति । ३ । ९ । १ । संतमेव मत्वा
स्वमेकतया स्वैश्वर्यं सम्यक्तया बहुमन्यमानमेतन्मनुष्य-
काव्यं गीत्वा किं तटाकपरिवृतकेदारपरिवृतकृष्णकुरं-
गपुरे सत्यतयैव स्थितं मत्पितरं मत्पितृस्वामिनं विहाय
। ३ । ९ । २ । विच्छेदेन किंचिच्छून्येषु बहुविधेष्वनेकेषु
कल्पेषु वर्त्तितुं गंतुं मार्गं ददत्यस्मद्विपन्नायके तिष्ठति
गत्वाऽतीवाधिकसमीचीनविस्तृतकाव्यैर्विद्वांसो नीचै-
र्विचिंत्यैकमनुष्यस्य गानं किं भवेत् । ३ । ९ । ३ ।
किं सिद्ध्येत् कतिदिवसपर्यंतं पर्याप्तो विद्वांसोऽस्थिरम-
नुष्यान् गीत्वाऽऽर्जितो महानर्थो दीप्तिशालिमणिकि-

-रीटदिविषन्नयको गीतश्चेत् स्वात्मकमेव भावयित्वा जन्माऽप्राप्तिं स्वीकुर्यात् । ३ । ९ । ४ । स्वीकार्यं फलं नास्ति संकरविशोधनतुल्यमैश्वर्यमुदारं स्तुत्वा युष्मद्वाग्मित्वं नाशयंतो विद्वांसः स्वीक्रियमाणो न्यूनतारहितमपेक्षितं सर्वं ददत्तमवद्यरहितं मदुदारं मणिवर्णं काव्यं गातुमागच्छत । ३ । ९ । ५ । आगच्छत विद्वांसो युष्माकं शरीरं क्लेशयित्वा हस्तकार्यं कृत्वा जीवतैतन्नित्यलोके श्रीमंत इदानीं न संत्यद्राक्ष्म युष्मन्मधुरकाव्येन युष्माकं युष्माकमिष्टदेवतानां स्तोत्रं कृतं चेद्रक्तकांतिमत्तेजःकिरीटं मल्लक्ष्मीनाथं प्राप्नुयात् । ३ । ९ । ६ । अनुरूपौदार्यकीर्त्यवधिशून्यमेकसहस्रनामानमुपकारकं विहायान्यमहं न शक्तो मेघसदृशहस्तो महापर्वतसदृशदृढभुज इति भूमावेकं तृणमतीवाद्रीऽनृतानामभिधाने । ३ । ९ । ७ । वंशादधिकसदृशभुजशालिनीलावल्लभं शोधितमहागुणावधिशून्यं गीत्वा नीत्वा कायं विसृज्य तच्चरणयुगलस्याधः प्रवेष्टुमनुरागवानहं मायामनुष्यान् किं वक्तुं शक्नोमि मद्वाचा । ३ । ९ । ८ । वाचा मानुषं गातुमागतः कविर्न भवामि शोधनशालिगुणपरमोदारश्चक्रस्वामी ममैव सन् छायाशाल्यैहिकं साधयित्वा दिविषद्देशं च त्वं पश्येत्युक्त्वा पद मपि प्रयच्छेत्स्थित्वास्थित्वा । ३ । ९ । ९ । स्थित्वा



स्थित्वा बहुकालमाऽऽयासयदिदं शरीरं विहाय गत्वा गत्वा गत्वा वा दृष्ट्वा जन्मनिर्वर्त्तयेदिति विचार्योपगम्योपगम्य लोकत्रयष्टृकविभूतस्य मम सदा सदा इतः परमऽन्यस्य कस्य चित्काव्यमनुरूपं किम् । ३ । ९ । १० । अनुरूपमहागुणस्य दिविषदीशस्य कृष्णस्यानुरूपमहागुणोदारकुरुकापुरीशठकोपेनोक्तेऽनुरूपमहागुणे सहस्र एतदेकं दशकमनुरूपमहागुणं वक्तुं शक्तानां नास्ति जन्म । ३ । ९ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

अन्यस्तवेन विषयानधिगन्तुमिच्छू-
नालोक्य विस्तृतनिजव्यसनो दयालुः ।
तस्मान्निवार्य मनुजान्विफलस्स शौरे-
रन्येष्वनर्हकरणं नवमे स्वमाख्यत ॥ २९ ॥

रम्यस्थानादियोगादमितविभवतस्सत्पथप्रापकत्वा-
त्सम्यक्सायुज्यदानादनघवितरणात्सर्वशेषित्वचिह्नात् ।
प्ररूपाताख्यासहस्रैरवतरणरसैर्भुक्तिमुक्त्याभिमुख्या-
त्रैलोक्योत्पादनाच्च स्तुतिविषयतनुं व्याहरन्निन्दितान्यः ॥३२॥

---

## दशमं जन्मानि बहूनि दशकम् ।

जन्मानि बहूनि बहूनि कृत्वा बहिर्भूत्वा शंखेन चक्रं चापं प्रकाशवन्मुशलं प्रकाशवत्खड्गं गदां धृत्वा

पक्षिणं संचार्य लोके काठिन्यवतां राक्षसानामसुराणां नाशाय युद्धं कृतवतः सामीचीन्ययुक्तस्य गुणान्वक्तुं प्राप्तवानहं केनापि न्यूनताशून्यः । ३ । १० । १ । न्यूनतारहितविशालसमुद्रे तेजोवति सर्पे आरुह्य स्वसुंदररक्ततामरसनेत्राभ्यां निद्राण इवैकं योग्यं कृतवतो दीप्तिमन्मणिवर्णस्य कृष्णस्य रक्तालंकारनासिकं पतगं संचार्यासुरांश्छिन्नवतः स्वामिनः पूर्णगुणान्स्तुत्वा गीत्वा नर्त्तित्वाहं केनापि प्रतिबंधकेन शून्यः । ३ । १० । २ । प्रतिरोधशून्यबहुभोगमेकमद्वितीयनायकं त्रिलोक्यनुरूपं खण्डमद्धमृतं समीचीनक्षीरं फलमिक्षु तं मकरंदयुक्तविकस्वरशीतलसुंदरतुलसीकिरीटं नत्वा तद्विषये प्रपदनानंतरमल्पेनाप्यहं मन्मनसि दुःखितो नास्मि । ३ । १० । ३ । दुःखं विना वाणं रक्षिष्याम इति तदा बलेन सहागत्याभिमुखीभूतं त्रिपुरघ्नं पुत्रं पुनरग्निं च युद्धे पराजेतुं युद्ध्यमानपक्षं पक्षिणं संचारितवंतं मायिनं गोपं स्वर्णचक्रं हरिमच्युतमाश्रित्याहमीषदपि दुःखितो नास्मि । ३ । १० । ४ । क्लेशमंतरेणैवैकदिने एकसमये सर्वाल्लोकानतीत्य व्याप्तकीर्त्तौ पार्थे वैदिके च सहारोहतोर्द्दृढरथं प्रवर्त्य प्रभावतेजोरूपतया स्थिते स्वस्य ज्योतिषि वैदिकपुत्रान्शरीरेण सहाऽऽ-नीय दत्तवंतमाश्रित्य केनापि दुःखेन रहितो



स्मि । ३ । १० । ५ । दुःखरहिते प्रभावतेजसि स्वीयज्योतिषि स्थितप्रकारेणावस्थित एव दुःखे क्लिश्यमानानां मनुष्याणां जन्मस्वाविर्भूय चक्षुर्विषयमागत्य दुःखानि कृत्वा स्वदेवस्थितिं लोकेषु प्रवेशं प्रतिष्ठापयतः स्वामिनो दुःखरहितगुणस्य कृष्णस्य मायिनः गुणाननुभूतवानहमेकेनापि दुःखेन रहितोस्मि । ३ । १० । ६ । दुःखं सुखं भवत्कृतकर्म भूत्वा लोका भूत्वा सुखशून्यक्रूरनरको भूत्वा भोग्यसमीचीनाकाशस्वर्गो भूत्वा स्थिरबह्वात्मानो भूत्वा बहुबहुमायामोहैरानंदावहैस्तल्लीलाशालिनं प्राप्तवान् केनापि दुःखेन न युक्तोस्मि ।३ । १० । ७ । दुःखरहितानंदावधिशून्यं सर्वत्र सौंदर्यपूर्णव्याप्तकांतिं कमलकुसुमांगनाभोगव्यामोहभूतं स्थितं स्वामिनमवधिशून्यज्ञानं ज्ञानं तदेवादाय सर्वकर्माणि कुर्वंतमवधिशून्यमायं कृष्णं पादमाश्रित्याहमेकेनापिदुःखेन विशिष्टो नास्मि । ३ । १० । ८ । दुःखशून्यज्ञानप्रभावतेजोमूर्त्तिं तुलसीमालायुक्तं स्वामिनमतिशयितबहुमायाभिर्विकृतं कुर्वंतमभिमतं रूपं धृत्वा नम्रोपकारकेण सहाजप्रभृतीन्सर्वान्सर्वाणि च स्वांतरविशेषेणानुरूपं निगरणे शक्तं प्राप्तः केनापि शिथिलो नास्मि । ३ । १० । ९ । शैथिल्यमंतरेण सर्वदा सर्वत्र व्याप्ताद्वितीयकारणज्ञानमेकं भूत्वा परिच्छिन्नरूप-

चेन्द्रियाविदितप्रकारेण रूपतया स्थितं मीश्वरं मूर्त्तिमंतं भूतानि पंचोभयतेजोभिवृद्धप्रभमायिनं कृष्णं चरणयोराश्रित्याहं सर्वदाऽनर्थशून्योस्मि । ३ । १० । १० । नाशरहितसिद्धगुणं केशवं कुरुकापुरीशठकोपेनोक्ते गाथाद्वितीयसहस्र एतदेकं दशकमभ्यासयितुं समर्थानां सजनपदेषु नगरेषु सम्यक्पश्यत्सु समीचीनयात्रां कारयित्वा पदं लंभयित्वा स्वत्रिलोक्या दद्यादेकनायकत्वम् । ३ । १० । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम्

भूयोवतीर्य भुवि दिव्यवपुस्स्वकीयं
प्रत्यक्षयन्तमखिलांश्च गुणाननंतम् ।
स्तुत्या मुनिस्स्वचरितार्थतया न किंचि-
दुक्तं ममेस्त्यतितरां दशमे तुतोष ॥ ३० ॥

प्रादुर्भावानुभावात्परिजनविभवात्पावनालंक्रियत्वा-
न्मैत्र्यापारयोगादघटितघटनादेव भावप्रसिद्धः ।
आश्चर्यक्रीडनत्वात्सरसिजनिलयानन्दनाच्छन्दवृत्ते-
रैश्वर्यव्यक्तिमत्वादघशमनतनुं केशवं व्याजहार ॥ ३३ ॥

एवं सौन्दर्यभूम्ना तनुविहितजगत्कृत्यसौभाग्ययोगा-
त्स्वेच्छासंख्याकृतित्वान्निखिलतनुतयोन्माददानार्हकान्त्या ।
लभ्यार्चाविभवत्वाद्गुणरसिकगुणोत्कर्षणादक्षकृष्ट्या
स्तुत्यत्वात्पापभंगाच्छुभशुभगतनुं प्राह नाथं तृतीये ॥ ३४ ॥

इति श्रीसहस्रगीतौ तृतीयशतकं समाप्तम् ।

---



## अथ चतुर्थ शतके
## प्रथममेकनायका दशकम् ।

एकनायकाश्चिरकालं लोकान् स्वाधीनतया नियमयितारो नीलश्वदष्टचरणा विशीर्णभांडा महालोकसमक्षमस्मिञ्जन्मनि भिक्षां स्वयं गृह्णन्ति श्रीमन्नारायणचरणावविलंबेन चिन्तित्वोज्जीवत । ४ । १ । १ । उज्जीवत करानानीयेति लोकानां नियमयितारोऽस्मिन्नेव जन्मनि स्वमधुररसस्त्रीरऽन्येषु स्वीकुर्वाणेषु स्वयं त्यक्का क्रूरविद्योतमानकान्त्यातपवने गत्वा बाधां प्राप्नुयुः रक्तकांतिमत्किरीटं श्रीमन्नारायणं शीघ्रं चरणयोराश्रयत । ४ । १ । २ । चरणाश्रितशिरस्सु राजसु स्वयं सेवमानेष्वशनिनिर्घातसदृशमुरजेषु प्रांगणभूमौ जृंभमाणेषु स्थिताः रजोमिश्रधूलयो गच्छंति तस्माज्झटिति परिमलवत्तुलसीककिरीटस्य कृष्णस्य चरणौ स्मरत । ४ । १ । ३ । चिंताप्रसंगे समुद्रपुलिनसूक्ष्मसिकताभ्यो बहवः संघशो युगान्येतांल्लोकान् पालयित्वा व्यतीता गृहप्रदेशपार्श्वाविशेषं विनाशमन्तरेण किंचिन्न पश्यामस्तालचरणमत्तेभहिंसकस्य पादावाश्रयत । ४ । १ । ४ । आलपत श्रीदयामिति सुंदरशीतलविशालकुसुमशयने साभरणमृदुकेशिनीनां

सुखसंश्लेषामृतभुजः पटाऽग्रतो लम्बमाने वहुस्त्रीषु स्वयमधिक्षिपंतीषु सचरेयुर्मणिवद्भासमानविग्रहस्यास्मन्मायिनो नामोच्चार्योज्जीवत । ४ । १ । ५ । सुखजीविनस्सुखजीवने महावर्षे बुद्बुदवन्नष्टे नष्टे अघो गता इत्येतदंतरेण तदाप्रभृत्येतत्पर्यंतं सुखजीविनः सुखिन एव तिष्ठन्ति इति नास्ति स्थैर्य्यलिप्सायामगाधविशालसमुद्रशयनस्वामिदासा भवत । ४ । १ । ६ । अनुरूपमधुररसैस्तैः षड्भिरन्नं भुक्त्वा तृप्त्यनंतरं परिशुद्धमृद्वालापासु मुग्धांगनासु प्रार्थयमानासु पुनरपि भुक्तवंतः प्रयच्छत ममैकं कवलमिति स्खलंति तस्मादनुभवत तुलसीयुक्तकिरीटादिसुन्दरज्योतिषो गुणान् । ४ । १ । ७ । गुणशालिनः पूर्णयशसो राजन्या औदार्यस्वभावभूषा स्थित्वा सौलभ्येन लोकं स्वाधीनं कुर्वंतोपि तत्र तच्छून्या गुणवद्भोगेऽनुप्रविष्टा अपि भ्रष्टा भवन्ति च्युतिर्नास्ति फणशालिभुजगशयनस्य श्रीनामप्रवणा भवत । ४ । १ । ८ । क्रमागतानि नानाभरणानि वासनया सह च्छित्वा पंचेन्द्रियाणि जित्वा वननिविष्टकायं त्यक्तवंतोपि तदा तच्छून्याः कुलनित्याश्रितभोग्यस्वर्गं प्राप्यापि निवर्तेरन्न निवृत्तिर्नास्ति ध्वजस्थितपतगस्य स्वामिनश्चरणावुपगच्छतः । ४ । १ । ९ । संकुचितमत्यंतं



ज्ञानेन दृष्ट्वा सर्वं त्यक्तवतः संकोचो मोक्ष इति ज्ञानिनोपि तत्फलं नास्ति चेदल्पस्मरणमेकः पाशो भवेत् पुनश्च मोक्षो नास्ति हेयशून्यमीश्वरमाश्रित्य त्यागाकरणे मोक्षस्तदेव । ४ । १ । १० । तदेवोज्जीवनोपाय इति कृष्णचरणयोरुपर्यपचीयमानपुष्पोद्याना-वृतकुरुकापुरीशठकोपेनान्तरंगकैंकर्यतया कृतेलंकाऽस्युक्ते सहस्रे कल्याणगुणमिलितगानमेतद्दशकं स्वालित्यमन्तरेणाभ्यस्यंतोऽगाधदुःखनिवृत्त्योज्जीवनस्वभावास्तिष्ठेयुः । ४ । १ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

आद्ये चतुर्थशतके दशके शठारिः
स्पष्टस्तथा परहितं दयया विवृण्वन् ।
राज्यस्वरात्मपरिभोगचलाल्पभावौ
सम्यक्प्रसाध्य हरिमेव पुमर्थमाह ॥ ३१ ॥

श्रीमन्नारायणः स्वाम्यनुगुणमकुटो वीरधामाङ्कमौलि-
र्दुर्दान्ताराातिहन्ताद्भुतनियततनुः कल्पपाथोधितल्पः ।
विश्वाद्यज्योतिरुर्विधरफणिशयनो वेदरूपस्वकेतु-
र्निर्धूताशेषदोषः प्रभुरथ कथितः सुस्थिरैश्वर्यसीमा ॥ ३५ ॥

---

## द्वितीयं वालो भूत्वा दशकम् ।



वालो भूत्वा सप्तलोकान्भुक्त्वा यत्नं विना वटपत्रेऽन्नं वशं कुर्वतः स्वामिनश्चरणयुगलोपरि समर्पितशीतलसु-

न्दरतुलसीत्येव व्यामुह्यति प्रबलपापाया मुग्धवल्ली ।४।
२ । १ । वल्लीसदृशसूक्ष्ममध्याभिर्गोपीभिः सहामर्यादं
कृत्वारासे बंधं कृतवतः समीचीनचरणोपर्यलंकारसुगं-
धतुलसीत्येव वदति हंत व्याप्तपापायाः सालभंजिका
। ४।२।२। छंदोयुक्तवेदसमीचीनमाला नाना आदाय
देवानां महामुनीनां च स्तुत्यतया स्थितस्य रक्तचरण-
योरुपर्यलंकाररक्तस्वर्णतुलसीत्येवाक्रोशति हा प्रबल-
पापिष्ठाया मम माला । ४ । २। ३ । ऋजीपशून्यो-
दारगुणानवलंब्य समयिभिर्भेदानुक्त्वा प्रलप्यमानस्यो-
पकारकस्य परस्य चरणयोरलंकारभूतविकसितस्वर्ण-
तुलसीत्येवाधीते हंत प्राप्तपापाया मम विशालस्कंधाः ।
४ । २ । ४ । भुजशाल्यनुरूपनीलार्थं वृषभान्सत्ता-
लिंगितवतो बलवतो गोपालस्य कुम्भनर्त्तकस्य चरण-
युगलालंकारशीतलसुंदरतुलसीत्येव प्रतिदिनं शिथि-
लीभवति हा मम पुत्री । ४ । २ । ५ । स्युत्तममहाभूमि-
देव्यर्थं वराहो भूत्वाऽऽदिसुकाले विस्तृतस्थलमुद्धृतव-
तश्चरणयोरलंकारो विकसत्स्वर्णतुलसीत्येवाध्ययन्व्या-
मोहं प्राप्ता मम मुग्धा । ४ । २ । ६ । नित्ययुवति-
सुंदरकमलस्थश्रीदेवीं विशालमालावद्वक्षसि स्थापित-
वतश्चरणयोर्ग्रथितविकसच्छीतलसुंदरतुलसीकुसुमार्थमे-
वेयं व्यामुह्यति हंतोज्वलललाटा मम मुग्धलता । ४ ।



२ । ७ । लतासदृशसीतानिमित्तं लंकानगरे बाणानलं
प्रवेशितवतश्चरणयुगलस्यालंकारभूतसपरिमलविकसि-
तशीतलसुंदरतुलसीकुसुम एवेयमाशां करोत्यहमस्य
किं कुर्यां पूर्त्तिमत्यः । ४ । २ । ८ । पूर्णा यूयमप्येकां
कन्यां प्रसूयावर्द्धयत किं वदामि मत्प्रसूतां मुग्धां शंख
इति वदति चक्रमिति वदति तुलसीति वदति एवं
प्रकारेण वदति नक्तं दिवं किं कुर्याम् । ४ । २ । ९ ।
किं कुर्यां मम मुग्धकन्या मम मूढा मम वचसि न
मम वशेपि न भवति पूर्णाः दीप्तिकार्याभरणवक्षसः
कृष्णस्य चरणतुलसी सुवर्णकृताभरणमृदुकुचयोरिति
कृशीभवति । ४ । २ । १० ॥ आर्त्तिकराऽऽधिनिवर्त्त-
कास्मत्कृष्णचरणयोरऽधिककीर्त्तिमदुदारकुरुकापुरी-
शठकोपेनोक्ते श्लाघ्यगुणवत्सहस्र एतद्दशकमधीयाना
अधिककीर्त्तिमद्दिवौकसां भवंति समीचीनमालायाम-
न्विताः । ४ । २ । ११ ॥ श्रीदिव्यसूरिचरणावेव शरणम् ।

---

तं पुरुषार्थमितरार्थरुचेर्निवृत्त्या
सांद्रस्पृहासमयदेशविदूरगं च ।
ईप्सुश्शुचा तदनवाप्तिभुवा द्वितीये
स्त्रीभावनां समधिगम्य मुनिर्मुमोह ॥ १२ ॥
शैत्यात्सौगंध्यभूम्ना रुचिरुचिरतया पोषणादाभिरूप्या-
त्संदर्भात्पुष्पसंगान्महिततुलसिकामालया शंखतश्च ।
चक्राधीशस्य योगाद्दृढदलशयनादर्हणीयापदानैः
सपत्नानेकभोग्यान्निरविशदजितं कृष्णमूर्त्तिं शठारिः ॥ १३ ॥

# तृतीयं बिम्बाधरदशकम् ।

विंबाधरायै वृषभाणां ककुदोऽशिथिलंयः प्राकारव-ल्लंकानायको यथा नश्येत्तथा चायमनामयः कुलीनस-द्गजदंतं बभंजिथ पुष्पाविनाभूतं लं समर्प्य समये नाश्रितवानहं तथापि त्वत्पुष्पाविनाभूतविग्रहस्य लेपनार्हं चंदनं मन्मन एव । ४ । ३ । १ । लेपनार्हं चंदनं मन्मन एव धारणार्हमाला मम वाक्कृता मालैव दीर्घपीतांबरमपि सैव तेजोमयश्रीमदाभरणं च मर्मांज-लीकरणमेवेशस्य पृथिवीं निगीर्योद्गीर्णवतो मत्पितुरे-कमूर्त्तेः । ४ । ३ । २ । एकमूर्त्तिर्द्विमूर्त्तिस्त्रिमूर्तिर्बहुमू-र्त्तिर्भूत्वा पंच भूतानि भूत्वा द्वे तेजसी भूत्वा सूक्ष्मो भूत्वा नागमारुह्य मध्ये समुद्रं निद्राण नारायण तव विग्रहस्य सर्वं मदन्तः संपाद्यात्मदुःखमपनीतवान् । ४ । ३ । ३ । हिंसनं विचार्य्य मुखे स्तनं दत्तवत्या वंचकपिशाच्याः प्राणं संहृतवन् गोपमायिन् वामन माधव पुष्पशीतलमा-लामादाय त्वां समये न सेवितवांस्तथापि तव पुष्पशी-तलमालावद्दीर्घकिरीटस्य धार्या माला मम प्राण एव । ४ । ३ । ४ । माला मम प्राणः स्नेहः कनकज्योतिः किरीटाद्यसंख्यबहुविधाभरणान्यनुरूपवस्त्रमपि स एवो-पसर्प्यत्रिलोक्येज्यमाना कीर्त्तिश्च स एव कृष्णस्य



मदुपकारकस्य मत्स्वामिनः कालचक्रवतः । ४ । ३ । ५ । कालचक्रेण साकं शुभ्रं शंखं हस्ते धृतवानऽसि भूमिं सर्वां निगीर्योद्गीर्णवन् नारायणेत्येवमाक्रंदनं कृत्वा-हमाह्वयामि चेदपि किंचित्प्रसंगेनापि नागच्छसिचेदपि भूषणं भवेतां मन्मस्तकस्य त्वत्कमलसदृशशब्दायमा-नचरणौ । ४ । ३ । ६ । शब्दायमानचरणौ प्रसार्य रसामाक्रांतवन्सुंदरवामन शब्दायमानचरणयोरंजलिं ब-ध्नंतो यथा प्राप्नुयुस्तथा स्थितमायिन् परिमलशालि-पुष्पं पयश्चादाय स्तोतुं न शक्नोमि तथापि त्वज्जल्प-योग्यजोतिःश्रीरूपं मत्प्राणोपरिवर्त्ति । ४ । ३ । ७ । मत्प्राणस्योपरि भवन्नतिशयितसप्तलोक्यां निबिडः सर्वोपि भूत्वा स्थितज्योतिर्मयज्ञानमूर्त्ते तव ममात्मा मम तवात्मा एतत्प्रकार एव स्थितः किं वक्तुं शक्नोमि । ४ । ३ । ८ । वक्तुं समर्थो नास्मि त्वन्निरवधिककीर्त्ति-प्रवाहस्य पारप्रदेशं कदा प्राप्नुयाम्यहं प्रेमव्यामोहमारूढो दोषशून्यपरात्परानृतशून्यं परं ज्योतिरुद्धुष्य समीचीने-ष्टूपरितनपुरुषेषु स्तुवत्स्वहमप्यस्तौषम् । ४ । ३ । ९ । मयि च स्तुवति सप्तसु लोकेषु सर्वेषु च स्तुवत्सु पुनश्च स्वयमपि स्तुवति स्वस्य स्तुतौ क्रियमाणायां क्व समाप्तिर्मधुक्षीरेक्ष्वमृतरूपेण रस्ये सत्यहमपि मदुपकारकं स्तुतवानहमुज्जीवितुम् । ४ । ३ । १० ।

उज्जीवनोपायस्यान्यस्याभावमध्यवस्य कृष्णदीप्तचरणयो रक्तामरसवत्केदारवद्दक्षिणसुंदरकुरुकापुरीशठकोपस्यानृतशून्यगीतिसहस्र एतद्दशकमभ्यस्तवंतो भूमौ सुस्थिरं वैलक्षण्येन स्थिता व्योमापि नियमयेयुर्भूम्याः ४ । ३ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

भीतः परं हरिरमुष्य तथा स्वभावा-
देतन्मनोवचनदेहकृतक्रियाभिः ।
स्रक्चंदनप्रमुखसर्वविधस्वभोग-
स्संश्लिष्टवानिदमुवाच मुनिस्तृतीये ॥ ३६ ॥

चेतोगन्धानुलेपः स्तुतिवचनकृतस्रक्पटोंजल्युपात्ता-
लंकारः प्राणवासी कलितवरशिरोभूषणश्चेतनेन ।
शीर्ष्णा सत्पादपीठस्स्वतनुसदनतामात्मरूपे वितन्व-
न्नन्योन्यात्मत्वयोगात्प्रभुरगणि मिथः श्लिष्टभावोथ तेन ॥३७॥

---

## चतुर्थ भूमिं स्थित्वा दशकम् ।

भूमिं स्थित्वाऽऽलोड्य वामनस्य भूमिरियमिति वदति दिवं प्रणम्य तस्य नित्यवासस्थानं वैकुण्ठ इति हस्तेन दर्शयति नेत्राभ्यां जलं प्रस्राव्य स्थित्वा समुद्रवर्णेति वदति मातर्मम पुत्रीमधिकव्यामोहां कृतवतः किं कुर्यां धृतवलयाः । ४ । ४ । १ । धृतवलयौ हस्तौ



संयोज्योपकारक शय्यासमुद्र इति वदति रक्ताद्वितीयं सूर्यं प्रदर्श्य श्रीधरमूर्तिरियमिति वदति शिथिलीभवति नेत्रजले स्रवति स्थित्वा नारायणेति वदति अत्र मद्देवहूपमृगशावया क्रियमाणमेकं न जानामि।४।४।२।जानती रक्ताग्निमालिंग्याऽच्युत इति वदति शरीरे न दह्यते वलमानशीतलवायुमालिंग्य मम गोविंद इति वदति परिमलशालितुलसीकुसुमवासितया पापिष्ठया मया प्रसूतया निबिडवलयाग्रहस्तया हरिणशावया क्रियमाणं मम नेत्रयोरेकमेव किम् । ४ । ४ । ३ । पूर्णचंद्रं प्रदर्श्य दीप्तिमन्मणिवर्ण इति वदति स्थितं पर्वतमवलोक्य दीर्घैश्वरागच्छेत्याह्वयति सम्यग्वर्षति मेघे दृष्टे नारायण आगत इति नृत्यति एवमुक्तानेतादृशान्व्यामोहानकरोन्मम मृद्वद्याः । ४ । ४ । ४ । सुकुमारमहावत्सान्स्पृष्ट्वा गोविंदचारिता एत इति वदति गच्छतो बालनागस्य पृष्ठतो गत्वा तस्य शयनमिदमिति वदति किं भवेत्किमपि न जानामि दुःशककर्म्मवत्या प्रसूतां मृदुलतां मायिना मोहयित्वा क्रियमाणं नाटनम् । ४ । ४ । ५ । नरा कुम्भं धृत्वा नृत्यंति चेद्गोविंदो भवेदिति धावति अतिशयितवेणुनादे श्रुते मायीति मुह्यति गोपीनां नवनीते दृष्टे तेन भक्षितं नवनीतमिति वदति पिशाचिस्तनं भुक्तवति मत्तनया लता प्राप्त उन्मादः ।४।

४ । ६ । आरूढोन्मादेन सर्वे लोकाः कृष्णस्य सृष्टि-
रिति वदति भस्मन्यार्जवेन धृते दृष्टे सर्वस्वामिदासा
इति धावति सुगंधितुलसीकुसुमे दृष्टे नारायणमाले-
यमिति वदति ज्ञानदशायामज्ञानदशायां मायाधीनेयं
लक्ष्मीः । ४ । ४ । ७ । श्रीमतो राज्ञः पश्यति
चेच्छ्रियः पतिमपश्यमिति वदति आकारवद्वर्णा-
न्पश्यति चेत्त्रिविक्रम इति नृत्यति पेशीवद्देवा-
लयाः सर्वे समुद्रवर्णस्यालया एवेति वदति भये मोहे
च न विरमति कृष्णचरणावाद्रियते । ४ । ४ । ८ ।
आदृत्य भगवतः पश्यति चेद्भिस्तृतभूमिं भक्षितवाने-
वेति वदति नीलमहामेघान्पश्यति चेत्कृष्ण एवेत्यु-
ड्डीयते महादर्शनीयगोसमूहं पश्यति चेदुपकारकोऽ-
स्तीत्यनुगच्छति दुर्लभां पुत्रीं मायी जल्पयति व्या-
मोहयति । ४ । ४ । ९ । मुह्यति परित आदरेणाव-
लोक्य दूर एवेति दीर्घावलोकनं करोति खिद्यति वर्षे
नेत्रयोः प्रवहति घोरं निःश्वसिति शरीरे परवशा भवति
पुनश्च कृष्ण इति वदति स्वामिन्नायाहीत्याह्वयति
मोहाधिकप्रेमवत्या मम मुग्धायाः प्रबलपापार्हं किं
कुर्याम् । ४ । ४ । १० । प्रबलपापनिवर्तकं कृष्ण-
मुदारकुरुकापुरीशठकोपेन वाक्क्रियायोक्ते गाथासहस्र
एतद्दशकं सत्कृत्यमित्यभ्यस्यंत आनंदवर्द्धेकुंठं प्राप्या-



नादिपापे निवृत्ते सर्वेषु सेवित्वा वर्द्धमानेषु वैलक्षण्ये-
न तिष्ठेयुः । ४ । ४ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

तेन प्रहर्षमतिमात्रभवं स्वकीयं
सात्म्यं विधातुमथ दूरगते मुकुन्दे ।
संबन्धिनश्च सदृशांश्च विलोक्य शौरे-
र्भ्राम्यंस्तमेव मुनिरार्त्तिमगाच्चतुर्थे ॥ ३४ ॥

भूम्याद्यैस्सागराद्यैर्ज्वलनशशिमुखैर्वस्तुभिर्वत्सपूर्वै-
र्नृत्यद्भिः स्वैश्च लोकादिभिरथ पृथिवीक्षिद्भिरात्मीयदासैः ।
सौलभ्यैश्वर्यवर्गैरपि च गुणगणैर्वासुदेवो वियोगे
स्वीयैस्तुल्यैश्च भक्तान्व्यथयति मधुहेत्यब्रवीत्कारिसूनुः ॥३८॥

---

## पञ्चमं वैलक्षण्येन स्थित्वा दशकम् ।



वैलक्षण्येन स्थित्वा सततु लोकेष्वद्वितीयाज्ञाप्रवर्त्तनो-
पयोगिनाशरहितश्रियं क्षमाधिकं नियमयंतं स्वामिनं
क्रूराश्वं विदारितवंतं मंगलमित्यवहस्ताभ्यां परिपूर्ण
प्रणम्य सूक्तिमालाः समर्पयितुं भाग्यं कृतवत इतः परं
का न्यूनता सप्तजन्मसु । ४ । ५ । १ । अंजननयनपु-
ष्पवासिन्याधिष्ठितवक्षस्कं रक्तसुंदरविशालनयनं दिवि-
पन्नायकं पूर्णवाक्स्वरमालाभिः स्तुत्वानुसंधातुं
प्राप्तवान् उग्रदुरितानि सर्वाणि विशालभूमौ यथा

निवर्त्तेरन् । ४ । ५ । २ । अनवधिकानंदपरमावधौ स्थितमस्मदच्युतमनवधिकश्रियं कुसुमनयनं दिविषन्निर्वाहकमनवधिककाले स्वरमालाभिः स्तुत्वा संश्लेषं प्राप्तोऽनवधिकानंदपरमावधौ स्थितोहमाश्रित्यैव । ४ । ५ । ३ । आश्रित्य स्थित्वा सेवमानानां पापनिवृत्तये संश्लिष्यंतमुपकारिणं पक्षसुन्दरविहंगमस्वामिनं बलवच्चक्रस्वामिनं वाक्प्रवृत्त्या स्वरमालाभिः स्तुत्वाऽऽश्रयितुं प्राप्तवान्प्राणो मत्प्राणमहं न जानामि कृतवान्यत्प्रकारम् । ४ । ५ । ४ । सहनयोग्यान् समीचीनप्रकारान् प्रदर्शयंतं स्वामिनममराणामृषभं सर्वपदार्थान् विस्तारितवंतं मत्स्वामिनं वाङ्माला निर्माय स्तुत्वा सदानंदं प्राप्तो वायोरग्रे वेगेन पापदुःखानि भस्मीभवेयुर्यथा । ४ । ५ । ५ । श्यामलविग्रहोपर्यंजनचूर्णेनाल्पमेवानुलिप्तमहासुंदरविशालनयनं दिविषत्स्वामिनमुचितवाग्भिः स्वरमालाभिः स्तुत्वाऽनुभवं प्राप्तस्य दुर्लभमस्ति किम्ममाद्यप्रभृतीतः परं सर्वदा । ४ । ५ । ६ । सदैकतया स्थितैः समैरधिकैश्च स्वस्वस्य शून्यतया स्थितं सर्वलोकस्वामिनं पर्वतेनैकेन वर्षं निवारितवंतमुपकारकं वाङ्मालाः सम्यक् धारयितुं विधिं प्राप्तास्मः का न्यूनतास्माकम् । ४ । ५ । ७ । अस्माकं पुष्पोपरि पूर्णायाश्च स्नेहिनं



भूमिस्थानां दिवौकसां च स्वामिनं शीतलकमलध्रियमाणपादं स्वामिनं वाचकमाला वक्तुं प्रकारं निर्वोढुं शक्तानामितः परं को वा सदृशो विस्तृताकाशे । ४ । ५ । ८ आकाशे आकाशांतरुपरितनेषु भूमौ भूमेरधः स्थानेष्वष्टासु दिक्षु विच्छेदमंतरा स्थितं नम्रशंखविशालकरं कुम्भनर्त्तकमाकाशनायकं कवयितुं समर्थस्येतः परं सदृशोस्ति किम् । ४ । ५ । ९ । निर्गीयोद्गीर्य क्रांत्वा चोद्धृत्य शयित्वा स्थित्वा परिगृहीतालंकारेण वैलक्षण्येनोपविश्य संश्लेषं कृत्वा हृष्टप्रकारेण स्वस्यैव लोका इति वक्तुं योग्यतया स्थितमुदारद्राविडं कर्त्तुं कृतवान् दासानामानंदमेवम् । ४ । ५ । १० । वर्षाविनाभूतशीतलसुन्दरपर्वतवेंकटस्वामिनं वार्यविनाभूतविकसत्पुष्पोद्यानपरिवृतकुरुकापुरीकारिमारशठकोपोक्तसहस्र एतद्दशकेन परिमलाविनाभूतपुष्पे तिष्ठंति पापानि निवर्त्तयेत् । ४ । ५ । ११ ॥ श्रीदिव्यसूरिचरणावेव शरणम् ।

आनंदनिर्भरमदीनविभूतियुक्तं
वैकुण्ठनाथमथ वीक्ष्य मुनिस्स्तुवन्सः ।
नान्यस्समोस्ति मम नाप्यनवाप्य मध्ये–
त्यानंदपूरमधिपंचममाससाद ॥ ३५ ॥

आपन्नानन्यबन्धौ सरसिजनिलयावल्लभे सान्द्रमोदे
भक्तापध्वंसशीले तदुचितसमयाश्वासदानप्रवीणे ।
कर्पूरालेपशोभे समधिकरहिते तोषके सर्वपूर्णे
कृष्णेस्तुत्यादिभाजां शठरिपुरवदद्धन्यतां निन्दितान्यः ॥३९॥

---

# षष्ठं निवर्त्तकान्वयदशकम् ।

निवर्त्तकान्वयमितः परं क मृगयेमहि मातरो निरूपणेनानया कांतिमल्ललाटया प्राप्तः समीचीन-रोगोयं निरचिनुम युद्धोपकरणं स्वयं कृत्वा तदा पंचजापयति मायायुद्धे रथसारथावस्या मनः क्षुभितं मुह्यति । ४ । ६ । १ । भ्रमंति किलैतद्रोग इदमतीव महादेवतं संगतिं विना युष्माभिर्देवाविष्टाभिर्नृत्यत्क्षुद्र-दैवतं नेदं मोहं विना शंखश्चक्रमित्यस्यां शृण्वंत्यो यूयं वक्तुं शक्नुवंति चेत्सम्यगेव गृहं प्राप्नुयादिदं पश्यत । ४ । ६ । २ । इदं पश्यत मातर एतच्छाकुनिकवचो-वलंब्य यूयं यत्किंचित्कृत्वा तत्रैकं मद्यं मांसं च न कल्पयत मधुपूर्णतुलसीककिरीटस्य मायिन उपका-रकस्य चरणयोर्मंगलाशासने कृते तदेवानया प्राप्तस्य रोगस्य दुर्लभमौषधं भवेत । ४ । ६ । ३ । औषधं भवेदिति तत्रैकमायिप्रलपनशीलाया वचोवलंब्य युष्मा-भिर्नीलौदनस्यान्यरक्तौदनस्य खले कल्पनेन किं प्रयोजनमेककाल एव लोकान्सप्त च निगीर्योद्गी-र्णवतो महादेवतस्य नाम वक्तुं समर्थाश्चेदिमां लभध्वे । ४ । ६ । ४ । इमां लब्धुं प्रकार एतदेवावि-ष्टनृत्यं न हंतोत्पलविशालनयनयोर्बिम्बरक्ताधरे च



विवर्णा जाता कवलदानगजं संहृतवत उपकारकस्य श्रीनाम्ना धवलधूलीरादाय धारयत यूयं विरमेत । ४ । ६ । ५ । विरामावकाशमंतरा यूयं देवाविष्टा नृत्यथ मातरः आविश्य न विरमति वर्द्धते इदं विना मणेः सुन्दरवर्णस्य मायिनो दासानां चरणधूलीरादायालं-कर्त्तुमुद्योगेऽन्यन्नास्ति खल्वस्या दिव्यायाः । ४ । ६६ । दिव्याया दुर्लभमौषधमिति तत्रैकमजं मद्यं च प्राश्य नर्तनविशेषं कृत्वा युष्मद्भुजचालनयुक्ता मातरः शोषणनाशाय खराधरचलनदर्शनेन किं फलं प्रणमत मायिनः स्वामिनो दासान्वेदविदः । ४ । ६ । ७ । वेदविदः पुरस्कृत्य दिविषत्स्वामिश्रीपादावाश्रित्यास्या रोगमिममनिर्वर्त्त्य गत्वाऽवाच्यं बहूक्त्वाऽकृत्यंकृत्वा मद्य-मंतर्मेलयित्वा विकीर्य गीतं वाद्यं प्रवर्त्य यूयं देवाविष्टा नृत्यथेति नैच्यमेव । ४ । ६ । ८ । नैच्येन तत्रैकचां-डालप्रवर्तितमद्दलस्याधो दोषान्बहूनुक्त्वा युष्माकं देवा-विष्टनृत्यमनृतं द्रष्टुं न शक्नोमि सप्तानां जन्मनां क्षेमोऽस्य रोगस्य चेदमेवौषधं प्राप्तं च कृष्णस्योपकारकस्य चरणयोर्मंगलाशासनं कुरुत स्मृत्वा । ४ । ६ । ९ । स्मृत्वैकं देवं नाश्रयेत्तं विना युष्मदिष्टमुक्त्वा युष्मद्भुज-चालनं पतंत्यो मातरोऽभ्यस्यमानवेदनायकमुदारद्वार-वतीनायकं स्तुवंतु स्तुत्यनंतरं प्रणम्य नृत्येत । ४ । ६ ।

१० । प्रणम्य नर्त्तित्वा परिशुद्धमणिवर्णस्य दास्यं कृत्वा निवृत्तरोगेण च्युतिरहितानादिकीर्त्तिमतोदारशठकोपेनोक्ते च्युतिरहिते सहस्र एतद्दशकं भ्रांतिविषये प्रणम्य नर्तित्वा गातुं समर्था दुःखस्वभावरहिताः ४ । ६ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

स्वप्नोपमादनुभवादमुतोऽप्यलब्ध-
स्वापेक्षिते शठजिति व्यसनादिसंज्ञे
ये क्षुद्रदेवमुखतः परिहर्तुकामा-
स्ते वारितास्तदुचितज्ञगिरेव षष्ठे ॥ ३६ ॥

इच्छासारथ्ययोगात्महरणनवनाच्छ्रीतुलस्याढ्यमौलेः
स्तुत्याङ्घ्र्योः पादधूल्या स्वजनभजनतत्पादधूलीनमोभिः ।
तन्मूलस्वाङ्घ्रितुल्या तदितरभजनत्यागपूर्वोपसत्त्या
देवं प्राचिक्यपत्स्वप्रणयिषु भिषजं केसरस्रग्विभूषः ॥ ४० ॥

---

## सप्तमं शीलशून्यदशकम् ।

शीलशून्यक्षुद्रश्चेदपि क्रियमाणं पापं हंत महदाः भूमिं भक्षितवान्ज्ञानमूर्त्ते नारायणेत्येवं प्रतिकालमहं स्थित्वा हस्तशिराः क्रोशामि चेत्सुंदरविग्रहदर्शनाय नागच्छस्याह्वानमपि न करोषि । ४ । ७ । १ । गृह्यमाणेऽक्षयमानंदप्रवाहमसाररहितं ददन्मदुदाराः भूमिं गृहीतवन्वामन हंतेत्येवं मध्यरात्रौ समीचीनदिवसे चाहं स्थित्वाक्रोशामि चेत्कपटमायिंस्त्वाम्मन्नेत्रदर्शनार्थमागत्य न प्रयच्छसि ४ । ७ । २ । अविनाश्यक्रूरकर्माणि कियन्त्यकरवं क्रांत्वा भूमिं स्वीकृतवन्मत्स्वामिन्दामोदरेत्येवमुक्त्वा आकुश्याकुश्य द्रुतमना नेत्रजलं प्रवहंस्तिष्ठामि चेत्पापिष्ठस्त्वमित्येकं वद पापिष्ठस्य दृष्टिरगोचर आगत्य ४ । ७ । ३ । दर्शनयोग्य आगत्य मन्नेत्रयोरग्रतस्तामरसनयनविकासं स्वच्छरक्तस्वर्णविग्रह मत्स्वामिन् स्थित्वाऽनुगृहाणेत्येवं लज्जाशून्यक्षुद्रस्वभावोहमत्राक्रन्दामि किम् आहत्य दिविषद्भिर्ज्ञातुमशक्यप्रभावं स्वामिनम् । ४ । ७ । ४ । स्वामिन् बलवच्चक्रवक्रगाधसमुद्रमथनसमर्थ तव भुजानां चतुर्णां दर्शनं घटेतेति सर्वदा नेत्रयोर्जलं दधानः प्राणे शुष्यञ्छुष्यन्निदानीमेवागंतव्यमिति चपलोहं पश्यामि । ४ । ७ । ५ । दर्शं दर्शं त्वां दिदृक्षमाणोहं मम प्राणे जिह्वां प्रसारयामि ज्ञानं नास्ति प्रतिदिनं मम शरीरे प्राणे चान्येषु बाह्येषु च शेषं विना सर्वत्र स्थितोसि त्वां ज्ञात्वा ज्ञात्वा । ४ । ७ । ६ । ज्ञात्वा ज्ञात्वा विचार्यविचार्याहं मम प्राणस्यांतःपरिपूर्णज्ञानमूर्त्ति निर्मलं संस्थाप्य जनित्वा मृत्वा स्थित्वा व्याकुलीभावहेत्वज्ञाननिवृत्तिमाज्ञातः सुगंधितुलसीमालावत्स्वामिनहं त्वां साक्षात्कृत्य । ४ । ७ । ७ । साक्षात्कृत्य मम हस्ताभ्यां परिपूर्णं त्वच्छ्री-

पादयोरष्टसु दिशासु विद्यमानानि पुष्पाण्यादाय स्तुत्वा प्रहृष्य प्रहृष्य दासा वयं गीत्वा नृत्येम यथा समुद्रा-वृतभूम्यामुदारतुलसीमाल स्वामिन्नागच्छसि । ४ । ७ । ८ । दातुं न शक्नोम्येकं क्षंतुं न शक्नोमि पंचेंद्रियाणि जेतुमक्तो नियतः सन् प्रतिकालं पुष्पाण्यपचीय स्तोतुं न शक्नोमि चपले क्रूरे मन्मनसि स्नेहे वर्द्धमाने क्रूर-पापोहमज्ञानं प्राप्य परिभ्रमशामि क्व वा द्रक्ष्यामि चक्र-स्वामिनम् । ४ । ७ । ९ । चक्रस्वामिन्निति नम्रीभूय नेत्रजले प्रवहति पार्श्वेऽवलोक्य स्थित्वावसन्नः पापिष्ठोहं द्रष्टुं न शक्नोमि पूर्णज्ञानमूर्त्तिं वेददीपं मदुचित-ज्ञाननेत्राभ्यां दृष्ट्वाऽऽलिंगामि । ४ । ७ । १० । आलिंग्य स्थितेनानुरागेण तेन तामरसनयनं समूहीभूतगृहसुन्दरकुरुकापुरीमारशठकोपेनोक्ते च्युतिरहितोज्ज्वलद्राविडसहस्र एतद्दशकमालिंग्य गीत्वा नृत्ये शक्ता वैकुंठमारोहेयुः । ४ । ७ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

तद्वेषजातस्स हरिनामकथाप्रसंगा–
त्संज्ञामुपेत्य मुनिरुद्धदुःखबोधः ।
आपत्सखत्वमुखवाचकतस्तमुच्चै-
राकृष्य वाञ्छितमयाचत सप्तमेन ॥ ३७ ॥

आपद्बन्धुत्वदीप्तं निरवधिकमहानंददं कान्तलोकं
दुर्दर्शं देवतानां पितरमनुपधि सर्वभूतान्तरस्थम् ।



पूर्णज्ञानैकमूर्तिं धृतशुभतुलसिं चक्रनाथं श्रुतीनां
विश्रान्तिस्थानमीशं विशदबहुगुणं प्राह खिन्नः शठारिः ॥ ४१ ॥
दुःशीलो मांसचक्षुर्निरवधिदुरितो वीतलज्जो विलोलः
प्रेक्षाहीनोन्यसङ्गात्कृतमपि लघयञ्शीलमन्तर्दधानः ।
कर्मज्ञानादिशून्यो निरुपधिविहितां ज्ञानदृष्टिं विनिन्दन्
प्रख्याप्यैवं स्वदोषान्पतिगुणरसिकस्तद्दिदृक्षां च चक्रे ॥ ४२ ॥

---

## अष्टमं वृषभनियामकदशकम् ।

वृषभनियामकेन स्वामिना दिङ्मुखेन श्रीदेव्या च विभज्यानुभूयमानाद्वितीयविग्रहेण संघशः संघशोऽसुरान्भस्मीकर्तुं संकल्पाऽऽयुधं स्पृशता प्रतिसंचरताऽनाहतेन मणिरूपेण न्यूना न भवाम । ४ । ८ । १ । मणिरूपेण न्यूनतारहितपुष्पांगनाधिष्ठितवक्षस्केनालंकारमान् विशालपर्वतभुजबलवत्सुदर्शनदीर्घहस्तेन कैंकर्य्यमांश्च्युतिमंतरा दासस्य कैंकर्य्यं स्वीकृतवता मणिमायिनानाहतेन मुग्धमनसा न्यूना न भवामः । ४ । ८ । २ । मुग्धमनोन्यूनताशून्यां श्रियं मातरं कृतवत्या एकस्याः पिशाच्याः क्रूरविषस्तनपाय्यधिकज्ञानाल्पशिशुना फणवन्नागशयने स्वपता महापर्वतभुजेन परमपुरुषेण दीर्घमायिनानाहतया पूर्त्या न्यूना न भवामः । ४ । ८ । ३ । पूर्त्तिन्यूनताशून्यदीर्घशाखाभु-

जभव्यनीलायाः सहनशीलेन स्तनालिंगनेच्छावता युद्धवृषभान्सप्त च विमर्द्य प्रीतेन कलंकपूर्णरक्तपरिधानेन वेणुपात्रदण्डहस्तेन मध्यघंटासवतानादृतेन किसलयरूपेण न्यूना न भवामः । ४ । ८ । ४ । किशलयरूपेण न्यूनताशून्यायामसहायकारायां प्रसिद्धिं प्राप्तायाः शुकालापायाः कारणेन वर्द्धमानराक्षसनगरदाहकेन समधुकुसुमतुलसीमालापरिमलितकिरीटवता समुद्रभूम्यां शैत्याधिकेनानादृतेन ज्ञानेन न्यूना न भवामः । ४ । ८ । ५ । ज्ञानेन न्यूनताशून्यानां विस्तृतभूमिस्थानां ज्ञानार्थमुपायान्सर्वानुद्धृत्योक्तवता पूर्णज्ञानैकमूर्त्तिना वामनब्रह्मचारी भूत्वा क्रूरशक्त्या भूमिं स्वीकृतवता शक्तिमता स्वामिनाऽनादृतया वर्द्धमानकांत्या न्यूना न भवामः । ४ । ८ । ६ । वर्द्धमानकांत्या न्यूनताशून्यं सिंहरूपं प्राप्य वृद्धिं प्राप्याविर्भूय वर्द्धमानकांतिहिरण्यविशालवक्षो भित्त्वा प्रीतेन वर्द्धमानकांत्यनलसुदर्शनशंखवता मणिनीलवर्द्धमानकांतिनानादृतेन रेखावद्वलयेन न्यूना न भवामः । । ४ । ८ । ७ । रेखावच्छंखेनान्यूनमहाध्वनिनाऽस्वाधीनाज्ज्वलदग्निं प्रवेशयितुं ध्यात्वा महापृथिव्यां प्राग्दुःखं निवर्त्तितवता दुर्ज्ञेयैः शिवेन ब्रह्मणामराधिपतिना प्रणम्य स्तूयमानव्याप्तकीर्त्तिनानादृतया मेखलया



न्यूना न भवामः । ४ । ८ । ८ । मेखलयाऽन्यूनायाः सुकुमाराया विशालजवनाया भोगस्त्रियः कीर्त्तिमतः पितुर्वीरस्य बाणस्य भुजांश्छित्त्वा नागोपरि निद्राणेनेव लोकस्य सर्वस्य क्षेमस्थित्यर्थं योगं प्राप्तेनानादृतेन शरीरेण न्यूना न भवामः ४ । ८ । ९ । शरीरेणाऽन्यूनान्प्राणवियुक्तपर्वतखण्डान्स्थितानिव बहुखण्डानसुरनिवहांश्छित्त्वा प्रीतियुक्तेन विशालजलयुक्तजटाशिरा यात्राद्वितीय एकत्रांश नित्यं वसति तच्छरीरवतानादृतेनाऽऽत्मना न्यूना न भवामः । ४ । ८ । १० आत्मनाऽन्यूनाँल्लोकान्सप्त च स्वांतरंतर्भाव्य दधिनवनीतं भक्षितवंतं विशालकुरुकापुरीशठकोपस्य न्यूनताशून्यसूक्तिस्वरमालासहस्र एतद्दशकेन दृढसारयुक्तजन्म च्छित्त्वा वैकुंठमुपगच्छेयुः । ४ । ८ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

एवं रुदन्नपि शठारिरलब्धकामः
स्वोपेक्षणैकपरतामवधार्य शौरेः ।
तच्छेषतादिरहिते सकले स्वकीये
स्वस्मिन्नपि स्फुरितनिस्स्पृहतोऽष्टमेऽभूत् ॥ ३८ ॥

सौन्दर्यादौ स्वकीये हृदि च खनिकरे पूर्णतायां च कान्तौ
सम्यग्ज्ञान प्रकाशे वलयरशनयोर्वर्ष्मणि स्वस्वरूपे ।
स्याद्विष्णोर्यदुपेक्षा तदिदमखिलमुन्मूलनीयं तदीयै-
रित्यूचे कारिसूनुस्तदुपरि कथयंस्तं शिवायाश्रिताङ्गम् ॥ ४३ ॥

---

## नवमं शत्रवो हसंति दशकम्।

शत्रवो हसंति समीचीनबांधवा द्रुताः क्लिश्यंति असंख्यातदुःखोत्पादकोयं को वा लोकस्वभावः कृपालो समुद्रमाथिंस्त्वच्चरणयोरेवोपगमनोपायतया विलंबमंतरा दासं वद मरणप्रकारम्। ४। ९। १। मरणप्रकारो नाशप्रकारो ज्ञातयो बांधवाश्चोपर्युपरि निपत्य भ्रष्टवैशद्याः स्थित्वाऽऽक्रोशंत्ययं को वा लोकस्वभावो भाविप्रकारमेकं न जानाम्यहं नागशयन स्वामिन्नाह्वानप्रकारे त्वरस्व पश्य दासं लक्षीकृत्य। ४। ९। २। श्लाघ्यतां कुलारोपं ज्ञातीन्बंधून्प्राप्त-निधिं षट्पदव्याप्तपुष्पकेशा गृहं हित्वा प्राणत्यागं दृष्ट्वा न मर्षितुं शक्नोमि लोकस्वभावं समुद्रवर्ण दासं प्रागिवाविचार्य त्वच्चरणसमीपमाहूय दास्यं स्वीकुरु। ४। ९। ३। स्वीकुर्वित्यभिवृद्धाऽऽगता महती संपद-ग्निर्भवति स्वीकुर्विति तम आच्छादयत्ययं को वा लोक-स्वभावः उदारमणिवर्ण त्वच्चरणयोरुपगमनायोदार्यं कृत्वा दासं त्वत्कृपयाकर्ष। ४। ९। ४। आकर्ष-जले विकसति लोके स्थावराणि जंगमानि तत्रात्मानो जन्मनाशव्याधिजराभिर्दुःखिता भवंति अत्रैतदुपरि क्रूरो नरकोयं को वा लोकस्वभावः आकर्षय मां त्वं मणि-



वर्ण दासं मा मोहय। ४। ९। ५। मोहयित्वा दृढजालं प्रसार्य बाधित्वा हिंसित्वा भक्षयेयुर्धर्म्मार्थं ज्ञात्वा न विचारयंत्ययं को वा लोकस्वभावः सुगंधितुलसीकिरी-टपापिष्ठं तव दासं सम्यक्स्वीकृतवानितः परं मत्पूर्णो-भूताह्वयानुगृहाण। ४। ९। ६। मातरेतल्लोके स्थाव-राणि जंगमानि त्वमेवान्येन केनापि वस्तुना विना तव स्थितत्वाद्व्याधिर्जरामरणं जन्माधिरित्येतेषाम-भावायाह्वानं कुरु दासस्य क्रूरं लोकं मा प्रादर्शय। ४। ९। ७। प्रदर्श्य त्वयांतर्धायोद्गीर्णान्भूमिज-लाग्न्याकाशवायून् संयोज्य त्वया सुस्थिरं स्था-पितान्सृष्टादनिमिषाणां भोगस्थानादद्वितीयाण्डा-द्दुर्गान्निष्क्रमय्य मां तवाधिकज्योतिष्युन्नते दुर्लभयोः श्रीचरणयोः कदा योजयेः। ४। ९। ८। योजयेस्तव-शब्दायमानचरणावनिमिषानाश्रयेरन्यथा तथा कृत्वा नर्तयसि त्वं नागशयन दासोपि तज्जानामि अनुरागं सर्वं हापयित्वा मां त्वच्चरणावेव वहन् यथा संचरेयं दुर्लभयोः श्रीचरणयोर्योजितवानहं पश्येयम्। ४। ९। ९। दृष्ट्वा श्रुत्वा स्पृष्ट्वा घ्रात्वा भुक्त्वा संचरद्भिः पंचभिरिंद्रियैर्दृष्टमानंदं ज्ञातुमशक्यं निरवधिकं क्षुद्रा-नंदमुज्ज्वलाग्रहस्तवलयया श्रिया त्वयि चैवाधिव-सतोर्दृष्टचातुर्यं दृष्ट्वांत्यजमाश्रितवांस्त्वच्चरणौ। ४।

९। १०। श्रीस्वामिनो नारायणस्य केशवस्य परंज्योतिषः श्रीचरणयोः प्राप्तिमुद्दिश्य सुंदरकुरुकापुरीशठकोपेन श्रीचरणयोरुक्ते द्राविडसहस्र एतद्दशकं श्रीचरणावेव प्रापयेच्चरणौ प्राप्यापृथग्भवत ।४।९।११।

श्रीदिव्यसूरिचरणावेव शरणम् ।

शोचन्मुनिस्स्वसदृशं च सहायमिच्छँ-
ल्लोकं विलोक्य विपरीतरुचिं विषण्णः ।
अत्रत्यवासमसहन्हरिणा स्ववासं
वैकुंठकं प्रकटितं नवम ददर्श ॥ ३९ ॥

कारुण्यादब्धिमाथी तदुपरि शयितस्तत्समानांगवर्णो
ल्याताँदार्यस्स्वदाने रुचिरमणिरुचिर्वेषतोतीव भोग्यः ।
आत्मस्वेनानुभाव्यो दुरधिगमपदो बन्धमोक्षस्वतन्त्रः
स्वान्यप्रेमोपरोधी स्वदत इह विभुस्तत्पदोत्कंठिताय ॥ ४४ ॥
तापैस्संबन्धिदुःखैस्स्वविभवमरणैस्तापकृद्भोग्यसंगै-
र्दुर्गत्या ज्ञातिवृत्तेरनितरविधुतेरण्डकारानिरोधात् ।
प्रह्वीभावोज्झितत्वात्प्रलघुसुखपरिष्वंगतश्चातिशोच्यं
विश्वं द्रष्टुं न शक्तो निजपदनयने नायातिस्म स्वनाथम् ॥ ४५ ॥
स्वानां निर्वाहकत्वादहिपतिशयनादब्धिवर्णस्वभावा-
दत्यंतोदारभावाज्जलभिदुपलवद्दर्शनीयत्वयोगात् ।
सन्मौलित्वात्तुलस्या प्रियकरणमुखैरण्डसृष्टौ पटुत्वा-
त्सुमापत्यादिभिस्तं फलमतुलमवैद्वेजषामेष नाथम् ॥ ४६ ॥

---



## दशममेकस्य देवस्य दशकम् ।



एकस्य देवस्य लोकस्यात्मनोऽन्यस्य यावतोऽभावस्य समये चतुर्मुखेन देवलोकेनात्मनः सृष्टवति गिरिसदृशमणिगृहैर्दीर्घायां श्रीकुरुकापुर्यामंतः स्थित आदिनाथे तिष्ठत्यन्यं कं देवं मृगयथ । ४ । १० । १ । मृगयित्वा युष्माभिराश्रयणीयान् देवान्युष्मांश्च प्रथमं सृष्टवतोऽजहच्छ्रीकीर्त्तेरादिनाथस्य तस्य सादरं नित्यवासस्थानालयां सौधगृहावृतां सुन्दरकुरुकानगरीं तां गीत्वा नर्त्तित्वा स्तुत्वा गच्छत नानालोकस्था व्याप्य । ४ । १० । २ । व्याप्तदेवान्नानालोकान् सृष्ट्वा तदा सहैव निगीर्यातथायोद्गीर्य क्रांत्वोद्धरतीति दृष्ट्वापि न ज्ञातुं शक्नुवंति शिरोभिरमरैः सेव्यमानायां श्रीकुरुकापुर्यां तत्र परस्य प्रकारं विना नानालोकस्था दैवतं किंचिन्नास्ति वदत । ४ । १० । ३ । वक्रं योग्यतया स्थितस्य शिवस्य ब्रह्मणोऽन्येषामपि नायकः स एव कपालस्य समीचीनं मोक्षं दृष्ट्वा स्वीकुरुत तेजोवन्महाप्रकारपरिवृतसुंदरश्रीकुरुकापुर्यां तत्रेशविषये किंचिद्व्यर्थपरिभाषणेन किं स्याल्लिंगिनाम् । ४ । १० । ४ । लिङ्गप्रवृत्तपुराणवंतः श्रमणाः शाक्या

धृष्टवादकृतश्चान्ये युष्मद्देवाश्च भूत्वा स्थितोऽभिवृद्ध-
नीवारचामरैर्वीज्यमानायां श्रीकुरुकापुर्यां परिपूर्णतया
स्थित उपकारक एकमप्यसत्यं नास्ति स्तुवंतु । ४ ।
१० । ५ । स्तुत्वान्यमेकं देवमादत्तुं बहिः कृत्वा
युष्मानेवं प्रकारे विश्वास्य अवास्थापयत् सर्वेपि मोक्षं
प्राप्ताश्चेल्लोको नास्तीत्येव पंके नीवाराः कमलानि च
यत्र वर्द्धंते श्रीकुरुकापुर्य्यां तत्रातिसमर्थस्य मायाः
पश्यत तज्ज्ञात्वा ज्ञात्वा धावत ।४। १० । ६। धावित्वा
धावित्वा बहुषु जन्मसु जनित्वाऽन्यमेकं देवं गीत्वा
नर्तित्वा प्रणम्य बहुप्रकारेण मार्गमाश्रित्यापश्यत
मिलित्वा दिविषद्भिः स्तूयमानतया स्थितस्य श्रीकुरुका-
पुर्य्यां नृत्यत्पक्षिध्वजस्यादिमूर्त्तेर्दास्ये प्रवेश एव । ४ ।
१०।७।प्रविश्य दास्येन स्वं साक्षात्कृतवंतं मार्कंडेयं
तं नम्रोपकारकश्च तदोज्जीवयदिति नारायणकृपयैव
बकसदृशपुष्पविशालकेतकीवृतिमत्यां श्रीकुरुकापुर्य्यां
तत्रातिशयिताऽऽदिनाथे तिष्ठत्यन्यं देवं वदथ । ४ ।
१० । ८ । व्यवह्रियमाणैः षड्भिः समयैस्तैरन्यैश्च
स्वविषये परिच्छिद्य द्रष्टुमशक्यस्यादिनाथस्य वास-
स्थानभूतां श्रीमच्छीतलकेदारावृतां सुंदरश्रीकुरुकापुरीं
मनसि विद्यमाने ज्ञाने स्थापयत युष्मानुज्जीव्य गंतु-
मपेक्षंते चेत् । ४ । १० । ९ । उत्कृष्टं भवद्ये देवा ये



लोका अन्यच्च स्वस्मिन्विमलमूर्त्तिसदृशा एतस्मिन्
सर्वस्मिन् स्थितप्रकारेण तिष्ठति केदारे नीवारा इक्षुणा
तुल्या वर्द्धंते श्रीकुरुकापुर्य्यां तत्र ह्रस्वब्रह्मचारीभूतस्य
दीर्घकुंभनर्त्तकस्य दास्यकरणमेव । ४ ।१०।१०। दास्यं
कृत्वा चक्रस्वामिनं प्राप्तेन तेनोदारकुरुकापुरीस्वामिना
कालोन्मीलद्वकुलमालावक्षस्केन मारेण शठकोपेनाऽऽ-
शयोक्ते गीतिसहस्रे एतद्दशकमभ्यस्यतां पुनरावृत्ति-
शून्यं वैकुण्ठमहानगरमन्यच्च हस्तगतमेव ।४।१०।११।

श्रीदिव्यसूरिचरणावेव शरणम् ।

बंधे समेपि हरिणा निखिलात्मराशेः
संसारहेतुमितरत्र परत्वबोधम् ।
वेदेतिहासमुखतः परिहृत्य शौरे-
रर्चातनोस्स दशमे व्यवृणोत्परत्वम् ॥ ४० ॥

कल्पांतेपि स्थितत्वात्सकलसुरगणस्रष्टृभावाज्जनानां
रक्षायापादकत्वाच्छिवविधिभरणात्सर्वदेवात्मभावात् ।
तत्तत्कर्मानुरूपं फलवितरणतो वैनतेयध्वजत्वा-
न्मार्कंडेयावनादेः प्रभुमथशठजित्प्राह सर्वामरोच्चम् ॥ ४७ ॥

नित्यैश्वर्यं तु तुर्ये सहजबहुलसद्भोग्यमन्योन्यसक्तं
क्लेशापादिस्वतुल्यं स्वजनकृतकृतार्थीकृति क्षेहिवैषम् ।
संयुक्तं सद्गुणौघैस्स्वजनपरिहृतोपेक्ष्यमिष्टार्थरूपं
श्रेष्ठं निश्शेषभोगादमनुत शतके देवतासार्वभौमम् ॥ ४८ ॥

इति श्रीसहस्रगीतौ चतुर्थशतकं समाप्तम् ।

---

## अथ पञ्चमशतके
## प्रथमं हस्तपूर्णचक्रदशकम् ।

हस्तपूर्णचक्रमन्नीलमाणिक्येतीति असत्यमेव कृत्रिमसुक्त्वा बहिर्बहिरेव प्रवृत्य सत्यमेव प्राप्तवान् विधौ फलति निरोधकाः के हंत कृष्णोपकारक पश्याम इतः परं गच्छसि चेत् । ५ । १ । १ । गतवान्महार्जुनयोर्मध्ये मदीयदुष्टमणे क्षौद्रभोग्यामृतेत्येवं कानिचिन्नाटयानि वदति स्वयं चेन्मत्स्वामी सोहं भूत्वा निर्वृत आकाशो महापृथिव्यन्यत्सर्वं मदंतरेव । ५ । १ । २ । अंतरन्येषु सत्सु बहिरेव काञ्चन माया उक्तोदारमणिवर्णेत्येवं त्वामपि वञ्चयत्कपटं मनस्त्यक्तवानस्मि त्वां दृष्ट्वोज्जीवनं प्राप्तवाञ्जलप्रवाहे शयने शयानेतःपरं त्वां विहाय किं स्वीकुर्याम् । ५ । १ । ३ । किं स्वीकुर्यां त्वां विहायेति वाचकान्युक्त्वापि करचौरोहं मन आकृष्य नेत्रजलं प्रमृज्य त्वद्विषये निविडमवस्थाप्य मत्प्राणं न मोचयितुं समर्थो मयि मलं छित्त्वा मामाहूयानुगृहाण कृष्ण । ५ । १ । ४ । कृष्णमुपकारकं दिविषदां नीलमाणिक्यममृतमुपगम्यापि नोपगंतुं शक्नोमि मध्ये एकस्मिञ्शरीरे निधाय दृढं सम्यग्बद्ध्वा बहुकृतपापदृढरज्जुभिर्मांसा-



द्यविदितमाच्छाद्य मां गमनयोग्यं स्थापितवान् बहिरेव । ५ । १ । ५ । अविदितपार्श्वं बद्ध्वा द्विविधप्रबलकर्मभिर्बाधमानेषु क्रमिकशरीरेषु प्रवेशं निःसरितुं दृष्ट्वानुभूतवानस्मि वर्णवच्चतुर्दीर्घभुजं रक्ताधरं रक्तताम्ररसनयनं धर्मोद्युक्तसुदर्शनसुन्दरहस्तं नीलविग्रहं मत्स्वामिनमेव । ५ । १ । ६ । स्वामी चक्रवानुपकारकः स कुत्रत्योऽहं को यादृशामपि महापापिष्ठानामपि विधौ फलति फलतेव हस्तिपशुदुःखं निवर्त्तितवानसीति शिरोहस्त आकुश्यैव सत्यव्यामोहवानभवं मदुपकारकोपि मदुपर्यभूत् । ५ । १ । ७ । उपरितनदेवैर्भूदेवैश्चादरेण सेव्यमानो व्यामोहवानागत्यैतत्काले दासहृदये सुस्थिरोऽभवन्मत्स्यसदृशनयना महदैश्वर्यं सत्पुत्रा उपरितनमातापितरौ च स एवेतः परं भवेत् । ५ । १ । ८ । भवेयुः के सहाया इति तरंगितजलसमुद्रे मज्जन्ती नौरिव जन्मसमुद्रे स्थित्वा मयि कंपमाने देवालंकारेण श्रीचक्रशंखाभ्यां हा हेति कृपां कृत्वा दासेन सहापि संगतोभूत्।५।१।९।जातो दासवानिति तदेव स्वीकृत्य प्रीत आगत्य स्वयमेव सरसकृपां कृत्वा मम सर्वमपि स्वयमभून्मत्स्यो भूत्वा कच्छपो भूत्वा नरसिंहो भूत्वा वामनो भूत्वा वनचारी वराहो भूत्वा कल्की भविष्यतीतःपरं मेघवर्णः । ५ । १ । १० । मेघवर्णं कृष्णमुप-

कारकं कमलविशालनयनं कर्षणसमृद्धसुंदरकेदारकुरुकापुरीशठकोपोक्ते श्रीमद्वर्णसुंदरद्राविडानामेतत्सहस्रएतद्दशकं गानप्रकारेणाभ्यस्यन्तश्चरणयोरधः प्रविशेयुर्वर्द्धमानाः । ५ । १ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

आद्ये मुनिस्स शतकस्य तु पञ्चमस्य
श्रेयः स्वकीयहितबोधनमीक्षमाणः ।
एतद्विरोधिबहुलस्य ममात्र हेतुः
शौरेः कृपैव महतीति शशंस भूयः ॥ ४१ ॥

चक्रस्फायत्करत्वात्स्वजनवशतया रक्षणोद्युक्तभावाद्भव्यत्वात्स्वात्मदानादमलतनुतया श्रीगजेन्द्रावनाच्च ।
नानाबन्धुत्वयोगाद्विपदि सखितया व्याजमात्राभिलाषात्कारुण्याधीनवृत्तिं कमलदृशमवैत्कारिसूनुः कृतार्थः ॥ ४९ ॥

---

## द्वितीयं वर्द्धतां वर्द्धतां दशकम् ।

वर्द्धतां वर्द्धतां वर्द्धतां निवृत्तः प्रबलचेतनशापो बाधको नरकश्च शिथिलीभूतो यमस्यात्र यत्किंचिदपि नास्ति कलिरपि नश्येत्पश्यत समुद्रवर्णभूतानि पृथिव्यां परिपूर्णानि प्रविश्य रागान्गीत्वा स्थित्वा नर्तित्वा संचरंत्योऽपश्याम ।५ । २ । १ । अपश्यामापश्यामापश्याम नेत्रप्रियाण्यपश्याम दासाः सर्वे आगच्छत प्रणम्य प्रणम्य स्थित्वा कोलाहलं कुर्मः भ्रमरपूर्णशीतलसुंदरतु-



लसीकस्य माधवस्य भूतानि भूम्यां रागान्गीत्वा स्थित्वा नर्तित्वा व्याप्य संचरन्ति । ५ । २ । २ । विपरिवर्त्तयन्कलियुगो निवृत्तो देवाः स्वयमपि प्रविष्टा महाकृतयुगमाश्रित्य महानंदसागरः प्रवहति नीलमेघवर्णस्य स्वामिनः समुद्रवर्णस्य भूतानि भूम्यां कलकलार्थं प्रविश्य रागं गीत्वा सर्वस्थलं स्वाधीनं चक्रुः । ५ । २ । ३ । स्थानव्याप्तसमयान्सर्वानुद्धत्य दूरीकुर्वंतीव विशालसमुद्रशायिनः स्वामिनः स्वीयभूतान्येव भूत्वा शयानान्युपविशन्त्युत्थितानि गीतं बहु बहु गीत्वा संचरंत्युड्डीयमानानि प्रह्वीभूतानि नाट्यं कुर्वन्ति । ५ । २ । ४ । क्रियमाणो मम चक्षुषोरेक एव वर्त्तते एतस्मिँल्लोके वैकुण्ठस्य भूतान्येव भूत्वा मायया सर्वत्र स्थित्वा संशयः कोपि नास्ति राक्षसा असुरा उत्पन्नास्तिष्ठन्ति चेदुज्जीवनोपायो नास्ति भक्ताः कालमुद्धरेयुर्हत्वैव । ५ । २ । ५ । हत्वा प्राणं खादन्तं व्याधिं द्वेषं क्षुधामसमीचीनानि सर्वाणि स्थित्वाऽस्मिँल्लोके निराचिकीर्षवश्चक्रस्वामिदासा आगताः सम्यक् स्वरेण गीत्वोत्प्लुत्य नर्तित्वा भूमौ व्याप्ता गत्वा प्रणम्योज्जीवत दासाश्चित्तमार्ज्जवे स्थापयित्वा ।५ । २ । ६। संस्थाप्य युष्मद्धृदये स्वीकृतानां देवानां युष्मदुज्जीवयितृत्वं पुनरपि तेनैव पश्यत मार्कण्डेयोपि साक्षी मलिनं मन एकमपि मास्तु कृष्णं विना देवो नास्ति दातव्यं सर्वं

तन्मूर्त्तिभ्यस्तेभ्य एव प्रयच्छत । ५ । २ । ७ । दातव्या-
नुपहारान्दत्त्वा भोक्तुं सर्वत्र लोकेषु स्वमूर्त्तीः स्थापित-
वान्देवत्वेन स देवनायकः स्वयमेव चिह्नश्रीवक्षसस्तस्य
भूतानि गीतानि गीत्वा विषादं विना भूम्यामधिकानि
जातान्यादरेण प्रणम्योज्जीवत । ५ । २ । ८ । आद-
रेण प्रणम्योज्जीवत वेदपूतचं जिह्वायां निधायाच्युतं
ज्ञानविधिस्खलनं विना पुष्पसहितं धूपं दीपं चंदनं नीरं
च समग्रं कृत्वा आदरेण सेवमानैर्दासैर्भगवद्भिश्च समृद्धो
लोकः । ५ । २ । ९ । प्रत्यतिशयितलोकमादृत्य कृष्णस्य
श्रीमूर्त्तिं नम्रोपकारकेणाऽजेंद्रप्रभृतयो निबिडीभूता अम-
रसमुदायाः सर्वत्र व्याप्ता दासास्तुल्यतया सेवितुं
समर्थाश्चेत्कलियुगं किमपि नास्ति । ५ । २ । १० ।
कलियुगं किमपि यथा न स्यात्तथा स्वदासेषु कृपां
कुर्वाणं परिपूर्णकान्तिमत्तेजोमूर्त्तिं मायिनमुपकारकं
कृष्णं समृद्धकेदारदक्षिणविलक्षणकुरुकापुर्याः कारिमा-
रेण शठकोपेनोक्ते घुष्यमाणगुणे सहस्र एतद्दशकमन्त-
र्मालिन्यं छिंद्यात् । ५ । २ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

आत्मोपदेशविभवैः शमिताघवृन्द-
मारब्धवैष्णवसमृद्धिसमिध्यमानम् ।
आलोकयन्क्षितितलं कलिनाप्यधृष्य-
माशास्त मंगलममुष्य मुनिर्द्वितीये ॥ ४२ ॥



पाथोधिगेहकान्तौ सरसतुलसिकालंकृतौ दातृभावे
वैकुंठत्वे च चक्रप्रहरणवशितादेवतास्थापनादौ ।
स्वानामत्यापवनेषां सकलनियमने सर्वकर्मज्यभावे
नित्यासक्तैः स्वभक्तैर्जगदघशमनं प्राह कृष्णं शठारिः ॥ ५० ॥

---

## तृतीयं कलंकरहितज्योतिर्दशकम् ।

कलंकरहितज्योतिर्मद्रक्ताधरं मणिपर्वतं दोषरहित-
शीलमादिमूर्त्तिं विचिंत्यैव कांतिहानिं प्राप्य ज्ञानच्युताः
कियत्कालम् अपवादसन्नद्धा ग्रामस्थानामपवादः सखि
किं कुर्यात् । ५ । ३ । १ । किंकुर्याद्ग्राम्याणामपवादः
सखीतः परमस्मान्मम रक्ततामरसनयनो मम पूर्त्ति-
मपाहरत्पुरा रक्तरूपं नष्टं शरीरं कार्श्यं प्राप्तं मम
रक्ताधरे नीलनयनयोश्च वैवर्ण्यं प्राविशत् । ५ । ३ ।
२ । आगतशकटप्रहर्तृपादः पिशाच्याः स्तनमालिंग्य
पीतवान्रक्ताधरो मम पूर्त्तिमपाहरत् गत्वाऽऽगत्य च तेन
विना किंचिद्वचोरहितास्मि निर्वृतमत्सखि किं करि-
ष्यति ग्राम्याणामपवादः । ५ । ३ । ३ । ग्राम्याणाम-
पवादं क्षारं विकीर्य मातृवाक्यजलेनाऽऽप्लाव्य सङ्गत्री-
हिमुग्धाऽङ्कुरितं मनसि महति केदारे महानुरागं समु-
द्रतुल्यतया वर्द्धितवान् मेघसदृशविग्रहशाल्यस्मदीयः

कृष्णः सखि कठिनो वा । ५ । ३ । ४ । कठिन उग्रो महास्वामी लोकग्राहिचरणो दुर्ज्ञानशरीरो मायावी तथापि उग्रं मन्मनः स एवेति तिष्ठत्यहो डमरुसदृश- मध्ये मुग्धे सखि माता किं करिष्यति । ५ । ३ । ५ । माता किंचित्करोतु किं ग्राम्याः किंचिद्वदंतु किं स- ख्यो मां प्रति इतः परं युष्माकमाशा नास्ति पतितास्मि प्रथमामरादेरुदारद्वारवतीराजस्य मणि- वर्णस्य वासुदेवस्य वागुरायाम् । ५ । ३ । ६ । वागुरायां पातयित्वा मां समीचीनमन आहूय स्वीकृत्य तरङ्गितसमुद्रे शयानं स्वामिनं चक्रिणमुपकारकं वस्त्र- शालिविपुलजवने सख्यस्मन्नयनैर्दृष्ट्वा शिरसा प्रणा- मोपि भविता किं योषितां पुरतः । ५ । ३ । ७ । पिशा- चीस्तनं पीत्वा शकटं प्रहृत्यार्जुनमध्ये गत्वा समूलं पातयित्वा पक्षिमुखं विदार्य गजं संहृतवंतं शुद्धस्मितं बिंबाधरमुपकारकं कदा वा वयं प्राप्नुमः सखि तथा यथा मातरो लज्जेरन् । ५ । ३ । ८ । लज्जां पूर्त्तिं चापहृत्य मम समीचीनं मन आहूयोन्नतोन्नताकाशे वसंतं देव- नायकं तं शपे मत्सखि प्रतिलोकमपवादमुक्त्वा शक्यानि कौटिल्यानि कृत्वा केवला मडल गृहीत्वा सञ्चराणि । ५ । ३ । ९ । वयं मडलसंचारं कृत्वाप्य- स्मच्चक्रसुन्दरहस्तस्योपकारकस्य परिशुद्धदलशीतल-



सुंदरतुलसीकुसुमं गृहीत्वा धरामोऽल्पां लज्जां विना प्रतिवीथि पार्श्वस्त्रीणां रसनापरिवर्त्तनाऽनर्हानपवादा- नुक्त्वा सर्वत्र देशेषु क्रोशत्सु । ५ । ३ । १० । घोषं नीलार्णववर्णं कृष्णमुपकारकं तं परिमलशाल्युद्यान- कुरुकापुरीशठकोपेनोक्त पङ्क्तिशालिन्यन्तादावेकस्मि- न्सहस्र एतद्दशकमनुसंधातुं शक्तानां वैकुण्ठो भवंति स्वग्रामाः सर्वे । ५ । ३ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

पूर्वानुसंहितमनोहरशौरिमूर्तेः
संश्लेषलोलहृदयस्तदलाभखिन्नः ।
लाभे स्वयत्नमपि कर्तुमियेष दुःखा-
द्वार्यादशां च परिगृह्य मुनिस्तृतीये ॥ ४३ ॥

ज्योतीरूपांगकत्वात्सरसिजनयनानिष्टविध्वंसकत्वा-
न्मेघौघश्यामलत्वाच्छ्रितसरसतयोत्कृष्टसौलभ्ययोगात् ।
रक्षायां सावधानात्सुभगतनुतया स्वोपकारास्त्रवत्त्वा-
त्स्वानां प्रेमातिमात्रं जनयति भगवानित्यवादीच्छठारिः ॥ ५१ ॥

---

# चतुर्थं ग्रामास्सर्वे सुप्ता दशकम् ।

ग्रामाः सर्वे सुप्ता लोकाः सर्वे निबिडान्धाकारा जाताः जलानि सर्वाणि प्रसन्नानि एका दीर्घरात्रिरभि- वृद्धाऽभूत् भूमिं सर्वां भक्षितवानस्मन्नागशयनो नाग- च्छति को वा सखि प्रबलपापायाः प्राणं रक्षेदितः

परम् । ५ । ४ । १ । प्राणं रक्षेदितः परं कोवाऽगाधसमुद्रं भूमिमाकाशं चावृत्य महाविकारैकप्रबलरात्रितया दीर्घीभूता इन्दीवरसदृशवर्णो मत्कृष्णोपि नायाति पापिष्ठाया मे मनस्त्वमपि नानुकूलं वर्त्तसे । ५ । ४ । २ । त्वमप्यनुकूलं वर्त्तसे न मनो दीर्घा रात्रिश्चोपरतिकालशून्या कल्परूपा दीर्घाभूत दृढत्कठिनचापो मत्काकुत्स्थो नायाति मरणोपायं न जानामि प्रबलपापाहं स्त्रीजन्मा । ५ । ४ । ३ । स्त्रीजन्मभिरनुभूयमानं महादुःखं द्रष्टुं न शक्नोमीति उज्ज्वलकिरणोऽनागत्यांतर्हित इमां भूमिं मितवान्नेत्रयोर्महान्रक्ताधरोऽस्मन्नीलर्षभो नायाति चेत्सख्यधिकं मनोव्याधिं निवर्त्तयेत्को वा मदीयमेव । ५ । ४ । ४ । को वा मां परामृशेन्मातरश्च सख्यश्च यूयं कीदृशीयमित्यनुत्का दीर्घा रात्रिं निद्राथ मेघसदृशविग्रहोऽस्मत्कृष्णोपि नायाति नाम मां न नश्यति प्रबलपापाया मम पश्चाद्वर्त्तमानम् । ५ । ४ । ५ । अनुदृतवर्त्तमानः प्रेमव्याधिर्मनोऽतीव बाधते पुरतः स्थित्वा रात्रिकल्पश्चक्षुषी यथान्तर्मज्जतस्तथाऽऽवृणोत् स्थिरस्थितचक्रोऽस्मन्मायी च नायाति एतत्स्थिरदीर्घप्राणं रक्षेत्को वात्र स्थले । ५ । ४ । ६ रक्षेत्को वात्रावधिभूतान्धकारः सूक्ष्मबिंदुदैर्घ्यस्वभावकल्परूपतया वर्त्तमानरजनीमुखे परिशुद्धस्वभावधव-



लशंखचक्रो नाविर्भवति अग्निस्वभावप्रबलपापाहं देवाः किं कुर्याम् । ५ । ४ । ७ । देवाः किं कुर्यामेका रात्रिः सप्तकल्पभूता यथार्थतयाऽऽगत्य स्थित्वा मम प्राणं बाधते हस्तस्थितचक्रो मत्कृष्णोपि नायाति चेच्छरीरस्पर्शी शीतलदक्षिणानिलः क्रूराग्नेः स्वयं बाधते । ५ । ४ । ८ । क्रूराग्नेः स्वयं बाधतेऽधिकान्धकारः सूक्ष्मविन्दुः सुंदरकिरणस्य सूर्यस्य सुंदरदीर्घरथो न प्रादुर्भवति रक्तकांतितामरसनयनः श्रीमांश्च नायाति मनोदुःखनिवर्त्तक इतः परं को वा स्थित्वा द्रवामि । ५ । ४ । ९ । स्थित्वा द्रवन्त्यहमिव महाकाशो लयं प्राप्य द्रवीभूय सूक्ष्मबिंदुरूपो वर्त्तते निशामुखे तदैकदा भूमिं मितवानुपकारको नागच्छेदित्येकमेकदा न वदेल्लोको हा निद्राति । ५ । ४ । १० । निद्राणवद्योगं कृतवन्तं स्वामिनमभिवृद्धोद्यानपरिवृतकुरुकापुरीशठकोपोक्ते रागाभिवृद्धिमत्यन्तादौ सहस्र एतद्दशकेन मृत्वा गत्वा वैकुण्ठं न प्राप्नुवन्तीति कथं वा । ५ । ४ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

तां च त्वरां विदधती सकलेन्द्रियाणा-
माच्छादिका सविधगांश्च विसंज्ञयन्ती ।
वेलातिगा विरहिणीत्वजुषो मुनेस्तु
मोहाह्वया रजनिरभ्युदिता चतुर्थे ॥ ४४ ॥

आपद्बंधुत्वकीर्त्या यदुकुलजननाद्वीरवीरत्वकीर्त्या
लोकानां विक्रमाद्याश्रितदुरितहृतेरद्भुतैश्चेष्टितैश्च ।
चक्राद्यस्त्रान्वितत्वात्कमलनयनतासंपदा वामनत्वा-
त्क्षीराब्धौ शेषशायी जगदवनमहादीक्षितोऽज्ञायि तेन ॥ ५२ ॥

---

# पंचमं कथं वा भो मातरो दशकम् ।

कथं वा भो मातरो मह्यं कुध्यथ यूयमस्मत्सुंदर-
श्रीकुरङ्गपुरपूर्णस्य मया दर्शनानन्तरं शंखेन नेमिना च
तामरसनयनाभ्यां च रक्तफलाधरेणैकेन च परिवर्त्तते
मन्मनः । ५ । ५ । १ । मन्मनसावलोक्य पश्यत मयि
कोपमकृत्वा दक्षिणायां समीचीनोद्यानश्रीकुरंगपुरपू-
र्णस्य मया दर्शनानंतरं भास्वरं सूत्रं कुंडले वक्षसि
श्रीचिह्नं च स्थिराभरणानि चतुर्भुजाश्चागत्य सर्वतस्ति-
ष्ठंति । ५ । ५ । २ । तिष्ठति मुह्यति शिथिलीभवतीति
मातरश्च कुप्यथ गोत्रगृहश्रीकुरंगनगरपूर्णस्य मया दर्श-
नानंतरं विजयिधनुर्गदासिश्चक्रं शंखश्च स्थिरा भास-
माना नेत्राभ्यां न निवर्त्तंते मनसश्च न निवर्त्तंते ।
५ । ५ । ३ । निवारणे न विरमंति नेत्रजलानीति
मातरश्च कुप्यथ मधुशाल्युद्यानश्रीकुरंगनगरपूर्णस्य मया
दर्शनानंतरं पुष्पशीतलमाला शीतलतुलसी स्वर्णकिरीटं
विग्रहश्चोचितभासमानक्षौमं कटिसूत्रं च पापिष्ठाया



मम पार्श्वं एव । ५ । ५ । ४ । पार्श्वमवलोकयंती
तिष्ठति शिथिलीभवतीति मातरश्च कुप्यथोचितकीर्त्ति-
श्रीकुरंगनगरपूर्णस्य मया दर्शनानंतरं निबिडज्योति-
र्बिंबाधरो दीर्घभ्रुवौ चारुरूपतामरसनेत्रे च पापिष्ठाया
मम हृदये तिष्ठंति । ५ । ५ । ५ । उपर्यपि प्रबलाप-
वादोऽस्मत्कुलस्येयमिति माता द्रष्टुं न प्रयच्छति उद्या-
नावृतशीतलश्रीकुरंगनगरपूर्णस्य मया दर्शनानंतरं
सुन्दरोन्नतनासालतातामरसनयने बिंबाधरश्च श्याम-
लविग्रहश्चत्वारो भुजाश्च मन्मनसि परिपूर्णाः । ५ । ५ ।
६ । पूर्णप्रबलापवादोऽस्मत्कुलस्येयमिति माता द्रष्टुं न
प्रयच्छति अतिशयितकीर्तिकुरंगपुरपूर्णस्य मया दर्शना-
नन्तरं पूर्णज्योतिःप्रवाहपरिवृतदीर्घस्वर्णविग्रहेण पूर्णो
मदन्तः सम्यक्स्थितो नेमिः सुन्दरकरेऽस्ति । ५ । ५ ।
७ । करे समीचीनं सुखं निदधाति शिथिलीभवतीति
मातरश्च कुप्यथांजनग्राहिगेहश्रीकुरंगनगरपूर्णस्य मया
दर्शनानंतरं रक्ततामरसनयने जघनं सूक्ष्ममध्यं विग्रहश्च
निबिडदीर्घकेशा लंबमानभुजाश्च पापिष्ठाया ममाग्रे
तिष्ठन्ति।५।५।८।पुरतस्तिष्ठसीति सख्यो मातरश्च कुप्यथ
स्थिरगेहश्रीकुरंगनगरपूर्णस्य मया दर्शनानंतरं मस्तकदी-
र्घकिरीटाद्यैरनवधिकैराभरणैर्युक्त इक्षुः क्षीरममृतं भूत्वा-
ऽऽगत्य मम मनो न त्यजत्येव । ५ । ५ । ९ । अत्य-

धिकैकप्रेमवतीयमिति माता न द्रष्टुं प्रयच्छति अन्यून-
कीर्त्तिश्रीकुरंगनगरपूर्णस्य मया दर्शनानंतरं संघीभूय
देवसमूहेषु हस्ताभ्यां प्रणमत्सु ज्योतिःप्रवाहमध्ये
भासमानैकविग्रहो मन्मनसि भासते केषामपि ज्ञातुमश-
क्यः ।५।५।१०। ज्ञातुमशक्यमुपकारकं चक्रसुन्दरक-
रमेवाकुश्य सुगंधिसमीचीनपुष्पमन्विष्य समीचीन-
कुरुकापुरीशठकोपेनोक्तलक्ष्मशालिसहस्रांतर्गतैतद्दशकं
श्रीकुरंगनगरविषये ज्ञात्वाऽभ्यसितुं शक्ता वैष्णवा अगा-
धसमुद्रभूमौ।५।५।११। श्रीदिव्यसूरिचरणावेव शरणम् ।

तादृक्स्वमोहगलने सति भावनाय
मूर्त्त्या हरेरवयवाभरणादिदृष्ट्या ।
प्रत्यक्षतस्तदनुभूत्यनवाप्तितश्च
प्रीत्या शुचा मुनिरयुज्यत पंचमे सः ॥ ४९ ॥

शंखाद्यैर्यज्ञसूत्रादिभिरपि च तथा शार्ङ्गमुख्यैस्तुलस्या
बिंबोष्ठाद्यैस्सुनासाव्रततिनिरवधिज्योतिरूर्जस्विमूर्त्या ।
नेत्राब्जाद्यैरशेषाभरणसुषमया स्वैश्च भक्तैर्मनोज्ञो
देवः स्वानामजस्रं स्मृतिविषयतया भाति चेत्यभ्यधायि॥५३॥

---

## षष्ठं समुद्रभूमिं सृष्टवान्दशकम् ।

समुद्रभूमिं सृष्टवानहमेवेति वदति समुद्रभूमिर्भवाम्य-
हमेवेति वदति समुद्रभूमिं स्वीकृतवानहमेवेति वदति
समुद्रभूमिं समुद्धृतवानहमेवेति वदति समुद्रभूमिं



भक्षितवानहमेवेति वदति समुद्रभूमीश आगत्या-
विष्टः स्यान्नतु समुद्रभूमिस्थानामिदं किमिति वदामि
समुद्रभूमौ मत्सुतयाऽभ्यस्यमानम् । ५ । ६ । १ ।
अभ्यस्यमानविद्यासीमाऽग्रहोहमेवेति वदति अभ्य-
स्यमानविद्या भवाम्यहमेवेति वदति अभ्यस्यमानवि-
द्योत्पादकोप्यहमेवेति वदति अभ्यस्यमानविद्यानिर्णा-
यकोऽप्यहमेवेति वदति अभ्यस्यमानविद्यासारोप्यह-
मेवेति वदति अभ्यस्यमानविद्यानाथ आगत्याविष्टः
स्यान्नतु अभ्यस्यमानविद्यानामिदं किमिति वदामि
अभ्यस्यमानविद्यया मत्सुतया दृश्यमानम् । ५ । ६।२।
दृश्यमाना पृथिवी सर्वाप्यहमेवेति वदति दृश्यमाना-
काशः सर्वोप्यहमेवेति वदति दृश्यमानः क्रूरोग्निः सर्वो-
प्यहमेवेति वदति दृश्यमानैतद्वायुः सर्वोप्यहमेवेति वदति
दृश्यमानसमुद्रः सर्वोप्यहमेवेति वदति दृश्यमानसमुद्र-
वर्ण आविष्टः स्यान्नतु पश्यन्तीनां लोकस्थानामिदं
किमिति वदामि पश्यंत्या मम बालया क्रियमाणम्।५।६।
३ । क्रियमाणा गतयः सर्वा अहमेवेति वदति करिष्य-
माणाश्चाहमेवेति वदति कृताः पूर्वं नष्टाश्चाहमेवेति वदति
क्रियाफलभोक्ताप्यहमेवेति वदति क्रियाकर्तृत्व कर्त्ता-
प्यहमेवेति रक्तकमलनयन आविष्टः स्यान्नतु ऋजुलोक-
स्थानामिदं किमिति वदामि रक्तफलाधराया बालमृग्या

विषये।५।६।४।अभ्यासं विना भूमिं रक्षाम्यहमेवेति वदति चलनं विना गिरिमुद्धृतवानस्मीति वदति अनैकान्त्यं विनाऽसुरान्हतवानस्मीति वदति प्रकारं प्रदर्श्य तदा पञ्च रक्षितवानस्मीति वदति अनैकान्त्यं विनार्णवं मथितवानस्मीति वदति अव्याहताज्ञः समुद्रवर्ण आविष्टः स्यान्नु अनिवृत्तलोकस्थानां किं वदामि अनिवृत्तमच्छ्रीसदृशसुताप्राप्तानि ।५।६।५। संघीभूतवंशपर्वतं धृतवानहमेवेति वदति संघीभूतर्षभान्हतवानप्यहमेवेति वदति संघीभूतमहावत्सांश्चारितवानप्यहमेवेति वदति संघीभूतगोसमूहान्रक्षिवानप्यहमेवेति वदति संघीभूतगोपप्रधानोप्यहमेवेति वदति संघीभूतदेवप्रधान आगत्याविष्टः स्यान्नु संघीभूतकुंतनयनानामिदं किं वदामि सदृशकुंतनयनया मत्सुतया प्राप्तानि ।५।६।६। बांधवा मम न संति केपीति वदति बांधवा ममात्र सर्वेपीति वदति बांधवानामुत्पादकोप्यहमेवेति वदति बांधवानां नाशयिताप्यहमेवेति वदति बांधवानां बांधवोप्यहमेवेति वदति प्राप्तशून्यो मय्यागत्याऽऽविष्टः स्यान्नु बांधवीनां किमुक्ता वदाम्यहमभिनिविश्य मम मुग्धयोच्यमानानि ।५।६।७। कीर्त्यमानत्रिनयन उपकारकोहमेवेति वदति कीर्त्यमानदिङ्मुखोहमेवेति वदति कीर्त्यमानामराश्चाहमेवेति वदति कीर्त्यमानामरे-



शोऽहमेवेति वदति कीर्त्तयन्तो मुनयश्चाहमेवेति वदति कीर्त्तनवन्मेघवर्ण आविष्टः स्यान्नु कीर्त्तयंतीनां लोकस्थानां किं वदामि कीर्त्तयंत्या मम कोमलभास्वल्लतायाः ।५।६।८। क्रूरपापेन केनापि न युक्तोस्मीति वदति क्रूरपापं भवाम्यप्यहमेवेति वदति क्रूरपापोत्पादकोप्यहमेवेति वदति क्रूरपापनिवर्त्तकोप्यहमेवेति वदति क्रूरस्य लंकानाशितवानहमेवेति वदति क्रूरपक्षिमानाविष्टः स्यान्नु क्रूरलोकस्थानामिदं किमिति वदामि पापिष्ठाया लताया मम सुताया अलंकारान् ।५।६।९। सौंदर्यशाली स्वर्गोप्यहमेवेति वदति सौंदर्य्यशून्यनरकोप्यहमेवेति वदति सौंदर्योज्ज्वलमोक्षोप्यहमेवेति वदति सौंदर्यशालिचेतना अप्यहमेवेति वदति सौंदर्य्यशाल्येककारणमप्यहमेवेति वदति सौंदर्य्यशालि मेघवर्ण आविष्टः स्यान्नु सौंदर्यशालिलोकस्थानां किं वदामि मम सौंदर्य्यशालिमालाधम्मिल्लायाः ।५।६।१०। धम्मिल्लवत्कुसुमांगनाया भूम्यंगनाया अभिजातगोपकिशल्यायाश्च वल्लभमुपगतेन पाण्ड्यसुन्दरदेशेन स्थिरकुरुकापुरीशठकोपेनांतरंगकैंकर्यतया कृते विचारिते द्रविडमालासहस्र एतदेकं दशमध्येतुं शक्ता लोके श्लाघनीयमहासंपदो भूत्वा श्रीवल्लभदासानां पूजायै तपः कृतवन्तः ।५।६।११॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

शोकं च तं परिजिहीर्षुरिवाखिलानां
सर्गादिकर्त्तुरनुकाररवेण शौरेः ।
तस्य प्रवृत्तिरखिलाचरिता मयेति
तद्भावभावितमना मुनिराह षष्ठे ॥ ४६ ॥
स्रष्ट्रवाद्यैर्जगत्यास्सकलविधकलावर्त्तकत्वेन भूता-
न्तर्यामित्वेन कृत्युद्धरणपरतया भूभरापाकृतेश्च ।
शैलेन्द्रोद्धारणाद्यैस्स्वजनहिततया ब्रह्मरुन्द्रेन्द्रभावा-
द्दुष्कर्मोन्मूलनाद्यैः प्रभुरनिशमहंबुद्धिबोध्योन्वभावि ॥ ५४ ॥

---

## सप्तममनुष्ठिततपश्शून्यदशकम् ।



अनुष्ठिततपःशून्यः सूक्ष्मज्ञानशून्यस्तथापीतः परं त्वां विहाय किमपि सोढुं न शक्नोमि भुजगशयनस्वामिन्पंके तामरसं नीवारमध्ये विकसति यत्र श्रीवरमंगलनगरे वैलक्षण्येनासीनमत्स्वामिंस्तवाधिको न भवामि तत्र ।५।७।१। तत्रत्यो न भवाम्यत्रत्यो न भवामि त्वद्दर्शनाशायां पतितोहं कुत्रत्योपि न लंकानाशितवन्स्वामिंश्चन्द्रचुंबिमणिगृहदीर्घश्रीवरमंगलनगरे नित्यसन्निधान शंखचक्रधरासहायस्य मम कृपां कुरु ।५।७।२। गुरुडविध्वज चक्रायुधाकाशजनपद मन्नीलजलदवर्णाऽवस्तु मां वस्तु कृत्वा दास्यं स्वीकृतवान्वैशाग्रशालिचतुर्वेदाध्येतृवहुपुरुषवृद्धिस्थानश्रीवरमंगलनगरे कृपां कृत्वा तत्र स्थितो न जाना-



म्येकं प्रत्युपकारम् ।५।७।३। प्रत्यर्थिभूतसन्निहितबलानां शतस्य नाशायासहायानां पञ्चानामर्थे तदा मायायुद्धं कृत्वा भस्मीकृतवन्मत्स्वामिन् भूमिमुद्धृतवन्स्वामिन्निर्मलज्ञानवद्वेदयज्ञविच्छेदशून्यश्रीवरमंगलनगरमधिष्ठाय वैलक्षण्येन स्थितवंस्त्वां क्व प्राप्तुमाह्वयामि।५।७।४। प्राप्तुमाह्वानं संभवेत्किम्मम यावच्छत्रुसमूहेषु प्रविश्य स्थित्वा कैतवानि कुर्वंश्छ्यामलविग्रहस्वामिन् कृतयज्ञैर्भूदेवैरविनाभूते श्रीवरमंगलनगरे कराभ्यां सेवायै स्थितोसि तदहमप्यपश्यम्।५।७।५। वराहो भूत्वा भूमिमुद्धृतवन्मत्स्वामिन्कृष्ण सदा मया दासवन्नाकाशनायक मणिमाणिक्यकान्ते मधुस्यंदिचूतवनशीतलश्रीवरमंगलनगरस्थानां कराभ्यां सेवायै नित्यवासं कुर्वन् वानमामलेसंज्ञदासस्य सेवयाऽऽगत्यानुगृहाण ।५।७।६। आगत्य कृपां कृत्वा मन्मनःस्थलं स्वीकृतवन्दिविषत्किसलय लोकस्यैकानादिमातापितृभूत कृत्स्नां सप्तलोकीं भुक्तवन् सत्कर्मवद्वेदयज्ञाविनाभूतश्रीवरमंगलनगरेंतशून्यगुणदासं मां न दूरीकुरु ।५।७।७। दूरीकर्तुं त्वया निवेशितानि मायिप्रबलपंचेंद्रियाणि स्युस्तत्सम्यक्ज्ञातवन्दूरीकृत्य मामपि त्वं दुस्तरपंके पातयसि खलु उज्ज्वलतेजोमणिगृहदीर्घश्रीवरमंगलनायक सदा दुष्प्रवेशामत्स्वामिन्पक्षिमुखभेदिन् ।५।७।८।

पक्षिमुखं भिन्नवन्नर्जुनमध्ये गतवन्वृषभान्सप्त हिंसित-
वन्मम वञ्चक मायिन्नीलमाणिक्यकान्ते वैशद्यवच्छ्रीम-
च्चतुर्वेदसमर्थ पूर्णशीतलश्रीवरमंगलस्यांतःकृतसन्नि-
धान मत्स्वामिन्ननुगृहाणोज्जीवनोपायं मम । ५ । ७ ।
९ । मार्गं मम त्वच्चरणावेव शरणं दत्तवानसि तवैकप्र-
त्युपकारो मय्येको नास्ति ममात्मापि तवैव पंकशाली-
क्षुभिर्महानीवारैश्च पूर्णे शीतले श्रीवरमंगले सुगंधि-
पुष्पशीतलतुलसीकिरीट देवनायक । ५ । ७ । १० ।
देवनायकस्य नारायणस्य त्रिविक्रमस्य चरणयुगल-
स्योपरिर्यपचयशालिपुष्पोद्यानावृतकुरुकापुरीशठकोपेन
प्रणीते सहस्र एतच्छीतलश्रीवरमंगलस्य सत्यं दशकं
सह सदा गातुं शक्ता दिविषदामतृप्तामृतम् ।५।७ ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

एवं च सोनधिगताभिमतस्तदासौ
नारायणादितरसाधनशून्यतां स्वाम् ।
तस्मै निवेद्य तदुपायधियैव किंचि-
दाश्वस्तवानथ मुनिः किल सप्तमेन ॥ ४७ ॥

सर्पाधीशे शयत्वादीरदरहरणात्सानुकम्पत्वयोगा-
त्सत्साहाय्यादशेषान्तरनिलयतया भूसमुद्धृत्युदन्तैः ।
सर्वेषां तातभावादितरजनदुराधर्षतादिश्शरण्यं
दीनानां प्राह विष्णुं शठजनमथनो देवतासार्वभौमम ॥ ५५ ॥

---



## अष्टमअतृप्तामृतदशकम् ।

अतृप्तामृत दासस्य मम शरीरं त्वयि प्रेमरूपं जलं
सचंचलं द्रवीभूतं द्रावयसि दीर्घव्यामोहशालिच्छ्रीस-
मग्रैर्नीवारैश्चामरैर्वीज्यमाने परिपूर्णजले तिरुकोडंदैस्थले
सौंदर्य्यपूर्णेष्वलंकारेषु भासमानेषु शयितवानस्यपश्यं
स्वामिन् । ५ ८ । १ । मत्स्वामिन्मद्धवलमूर्ते मदी-
शान नानामहारूपोऽभिमतप्रकारेण भवन्दीप्तिमद्वृषभ
रक्तमहाकमलानि समृद्धजलोपरि विकसंति यत्र तत्र
तिरुक्कोडंदैस्थले तन्महाकुसुमनयनयोर्निद्रां भजन्कि-
महं करवाणि । ५ । ८ । २ । किमहं कुर्यां को वा
गतिर्मां किं करोषि त्वत्तोऽन्यस्मात्कस्माच्च किमप्यपे-
क्षितं न प्रार्थये शिल्पपूर्णप्राकारपरिवृतकुंभघोणे शयि-
तवानसि दासस्य ममाणोर्जीवनकालो यावांस्तावंतं
त्वत्पादमवलंब्यैव क्षिपेयमवलोकय । ५ । ८ । ३ ।
दूरदर्शनशक्तानां दृष्टिगोचरपर्यंतं गच्छत्कीर्ते नाशशू-
न्यसकललोकवदेकमूर्त्ते कल्याणाधिकव्याप्ते तिरुकोडं-
दैदिव्यदेशे शयितवन् त्वां दिदृक्षमाणोऽहं व्याकुल
आकाशमवलोक्य रोदिमि प्रणमामि । ५ । ८ । ४ ।
रोदिमि प्रणमामि नर्त्तित्वा पश्यामि गीत्वाक्रंदामि
आश्लिष्टप्रबलपापेन पार्श्वमवलोक्य लज्जित्वाऽवनत-

शिरास्तिष्ठामि समृद्धसुंदरकेदारे कुंभघोणे शयितवन्न-क्रुतामरसनयन नम्रस्य मम त्वच्चरणयोः प्राप्तेः प्रकारमालोचय । ५ । ८ । ५ । विचारय ममानादिपापं छित्त्वा त्वच्चरणप्राप्तिप्रकारमवलोकयन्स्थित्वैव दुष्पूरावटानि पूरयन्कियंति दिनानि दूरे तिष्ठामि समृद्धानादिकीर्त्तिमदधिष्ठिते कुंभघोणे शयितदिविषन्नायक वीणास्वरामृतज्ञानफल हरिवृषभ । ५ । ८ । ६ । सिंह वृषभ मत्सुंदरस्वर्णप्रभ रक्तनयन नीलमेघ अग्निस्पृक्प्रवालाचलचतुर्भुज मत्स्वामिन् त्वत्कृपयैव अविनाभूतदासं मां स्वीकृतवन् कुंभघोणे श्रीवल्लभ न धरयेतःपरं त्वच्चरणं दत्त्वा मज्जन्म निवर्त्तय । ५ । ८ । ७ । निवर्त्तय दुःखं मा निवर्त्तय निवर्त्तकांतरशून्योहं परितो मुखनेम्यायुध कुंभघोणे शयितवन्महामायिन् शिथिले शरीरे मत्प्राणे विहाय गच्छति दौर्बल्यमंतरेण त्वच्चरणौ दृढमवलंब्य प्रवृत्त्यर्थमनुमन्यस्व त्वमेव । ५ । ८ । ८ । अनुमान्य मां त्वच्चरणयुगलस्याधःस्थापयन्स्वामिंश्चांचल्यरहितामरप्रधान प्रधानादिमहामूर्त्ते दिग्विसृमरकांतिसुंदरमहामण्याश्रये श्रीकुंभघोणेऽचंचलं लोकैराश्रयणार्थं शयितवानसि द्रष्टुमागच्छ । ५ । ८ । ९ । अनागच्छद्रूपी सन्नागच्छन्मन्मायिन्नाशरहितमूर्त्ते अतृप्तामृत सन्दासस्य मे प्राणस्यांतर्मधुरभूत अविनाश्यपापानां विनाशाय मां शासितवन् श्रीकुंभघोणग्रामे तव



दास्यं प्राप्यापि दासोहमितःपरमपि भ्रमामि किम् । । ५ । ८ । १० । अर्गलास्थियुक्तायाः पिशाच्याः स्तनस्यांतरतस्तस्याः प्राणं भक्षितवतश्चरणौ तावेव शरणं स्वीकृतवता श्रीकुरुकापुरीशठकोपेन वेणोर्मनोहरमुक्त एकस्मिन्सहस्र एतद्दशकं मौग्ध्यं विनाभ्यस्तवंतः कामा मृगसदृशाक्षीणाम् । ५ । ८ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम्

आश्वासलब्धधृतिना मनसा समेत्य
श्रीकुंभघोणशयमप्रतिमाभिरूप्यम् ।
आलोक्य सान्त्वनवचःपरिरंभणादी-
नप्राप्तवान्मुनिरखिद्यत सोष्टमेन ॥ ४८ ॥

निस्सौहित्यामृतत्वात्स्ववशजनितयाऽनन्यभावप्रदाना-
न्मर्यादातीतकीर्त्या नलिननयनतो नायकत्वात्सुराणाम् ।
सर्वश्रैष्ठ्यादियोगादनितरगतितायावहासत्रभावा-
द्दास्ये स्वे स्थापयेत्त्वान्हरिरितिशठजित्स्थापयामास कृष्णम्५६

## नवमं मृगसदृशनयनादशकम् ।

मृगसदृशनयनाः समीचीनाः सर्वदा पापिष्ठाया ममाऽवसादार्थं व्योमव्याप्तसुंदरक्रमुकैर्मधुमल्लिकाभिर्वासितैर्मधुपूर्णोद्यानैः परिवृते तिरुवल्लवाल्निवासिनं नायकं दास्यहं चरणयोः संगच्छामि कदा वा । । ५ । ९ । १ । कदा वा सख्यो मां यूयं बाधित्वा किम-

कुरुत स्वर्णवद्भासमानपुन्नागवकुलनव्यमाधवीरुपरि-
स्पृशता दक्षिणानिलेन परिमलिते तिरुवल्लवालिनगरे
स्थितस्योपकारकस्य चरणरेणुं दास्यो वयमादाय
दध्मः । ५ । १ । २ । भ्रियमाणपुष्पकेशिन्यो दुःखितां
मां बाधितुं गीयमानसमीचीनवेदध्वनौ सागरतरंगवद्घो-
षति पार्श्वे उच्चैर्होमधूमः परिमलयति शीतलतिरुवल्ल-
वालि नित्यं वसत उपकारकस्य चरणौ द्रक्ष्यामः किं
नित्यम् । ५ । १ । ३ । नित्यं च सख्यो मां यूयं
बाधित्वा किमकुरुत हरितपत्रदीर्घक्रमुकाः पनसा
नारिकेलाः कदल्यश्च सौधालंकारगृहोपरि स्पृशंति
शीतलतिरुवल्लवालिविषोरगभोग्यशयनीयेऽस्मदुपका-
रकस्य तत्सुसमीचीनमेव । ५ । १ । ४ । सुसमीची-
नसख्यः सुसमीचीनब्राह्मणयागधूमोऽञ्जनसामीचीन्या-
पहार्युन्नताकाशमाच्छादयति शीतलतिरुवल्लवालि
इक्षुसमीचीनखण्डं फलं भोग्यामृतं मत्सामीचीन्याप-
हारितेजः कदा वा नेत्रे द्रक्ष्यतः । ५ । १ । ५ । द्रक्ष्या-
मि कदा वा पापिष्ठाहं फलाधरमुग्धा गानध्वनिभ्रम-
रैर्बालदक्षिणानिलेन युक्तानि सर्वत्रोन्नतशाखाभिवृद्ध-
भूरुहसुंदरविपिनानि यत्र तिरुवल्लवालि वर्णिवामनसुं-
दरोपकारकस्य विकसत्तामरसपादौ । ५ । १ । ६ ।
पादयोरुपरि समर्प्य पुष्पाणि सेवासंभवेद्धा सालभं-



जिकाः समीचीना सागरविस्तीर्णतटाकेषून्नतानि ताम-
रसानि कह्लाराणि वनितानामुज्ज्वलानि मुखानि
नयनानि च धरंति तिरुवल्लवालिनाथस्येमां भूमिं
भुक्तवतोऽस्मत्स्वामिनः प्रतिदिनम् । ५ । १ । ७ ।
प्रतिदिनं विच्छेदमंतरा सेवा संभवेद्धा सुललाटाः यंत्र-
योग्यमधुरेक्षुभिः फलितनीवारैर्व्याप्ते सर्वत्र समीपे
मिथः संगतपुष्पतटाकयुक्तकेदारपरिवृते शीतलतिरु-
वल्लवालिनित्यसन्निहितोपकारकस्य भूमिमाक्रान्तवतो
दीर्घचरणयोः । ५ । १ । ८ । गलद्वलयेषु पूर्यमाणेष्व-
स्माभिर्दृष्ट्वा हस्ताभ्यां प्रणामो युज्येत वा वेणुरिति
वीणेति शीतलोद्यानस्यांतर्मधु पीत्वा मुग्धरेखाशालि-
भ्रमराः सस्वरं गायंति तिरुवल्लवालिभ्रमणाधिकच-
क्रवतः स्वामिनोऽनादिकृपैव । ५ । १ । ९ । अनादि-
कृपासत्कर्मणा कीर्तनं युज्येत किं सख्योऽनादिकृपाया
भूम्याकाशाभ्यां प्रणामायावस्थितश्रीनगरे सत्कृपाशा-
लिसहस्रेण समीचीनं दधति तिरुवल्लवालिसत्कृपस्या-
स्मत्स्वामिनो नारायणस्य नाम्नाम् । ५ । १ । १० ।
नामसहस्रवतोस्मत्स्वामिनश्चरणयोरुपरि क्षेमशालि-
सुन्दरकुरुकापुरीशठकोपेन ज्ञात्वोक्ते नाम्नां सहस्र एत-
द्दशकं तिरुवल्लवालिक्षेमवति ते नगरेऽभिदधाना उत्कृष्टा
जनित्वैव । ५ । १ । ११ ॥

श्रीव्यसूरिचरणावेव शरणम् ।

अन्यं मुनिः प्रतिहतस्तत एव भेदा-
द्वेदं महत्तमनसापि तु दिव्यदेशम् ।
तद्योग्यतामभिदधत्तदधीशपादौ
यायां कदेत्यकथयन्नवमे सदैन्यम् ॥ ४९ ॥

स्वामित्वात्संश्रितानामुपकरणरसाद्व्येष्टसंश्लेषकत्वा-
त्सर्वास्वाद्यत्वभूम्ना कपटवटुतया दारुणापत्सखत्वात् ।
दिव्यस्थानोपपत्त्या भ्रमदरिभरणाच्चापि नारायणत्वा-
दत्यासन्नः श्रितानां भवति हरिरिति प्राह कारेस्तनूजः ॥५७॥

---

## दशमं जन्मप्रकारदशकम् ।



जन्मप्रकारो वृद्धिप्रकारो महाभारतयुद्धं कृत्वा पंच प्रकारान्प्रदर्श्य कृत्वागतस्य माया मर्मण्यंतःप्रविश्य मम प्राणं स्थित्वास्थित्वा द्रावयित्वा भक्षयंति एतदुत्कृष्टापरिच्छिन्नतेजस्त्वां कदा प्राप्स्यामि ।५।१०।१। विवाहप्रसंगे वृषभेषूत्पतनं मायाश्वस्य मुखे विदारणं मधुस्पंदिकेशाभी रासक्रीडाया संश्लेषसौंदर्यं तदिदं किमिति वक्तुमशक्यं मां त्वत्कर्म शिथिलयति अनादिभूम्यादे त्वां कदा प्राप्स्यामि ।५।१०।२। गलत्पुष्पकेशपिशाचीस्तनभुग्बाल वैशद्यं च ततः परमेकशकटनाशाय रक्तपादेनैकेन कृतं तव बालशौर्यं च नवनीतभक्षणप्रसंगे मातरि यष्टिं गृहीतवत्यां तव त्वत्तामरसनयनयोर्जले वर्द्धमाने



संकुचितावस्थानं चागत्य मन्मनो द्रावयंति ।५।१०।३। कपटवेषं प्रगृह्य गत्वा पुरे प्रवेशप्रकारो मिलित्वाऽसुराणामंतर्भेदं कृत्वा प्राणभक्षणोपायाः प्रवाहजलजटस्य त्वदपृथक्स्थितिप्रकाशं स्थितेश्च मनस्यंतःप्रविश्यालोड्य मम प्राणं द्रावयित्वा भक्षयंति । ५ । १० । ४ । भक्षणार्थं देवराजस्य गोपैः कल्पितस्यौदनस्य भक्षणं वर्णवन्महापर्वतमुद्धृत्य वर्षानिवारणं पृथिवीं पूर्वं सृष्ट्वा निगीर्योद्गीर्य क्रांत्वोद्धृत्य संश्लेषणमायाश्च प्रतिचिंतनं मन्मनोऽग्निमुखे मधूच्छिष्टसदृशं स्थित्वैव ।५। १० ।५। स्थितप्रकार आसीनप्रकारः शयानप्रकारो दुष्करचिंतना अनेकरूपतयाऽरूपतयारूपतया च त्वन्मायाः स्थित्वा स्थित्वा स्मरामि त्वां कथं स्मर्तुं शक्नोमि पापिष्ठस्य ममैकं समीचीनं वद लोकं भुक्तवन्नुज्ज्वलतेजः । ५ । १० । ६ । उज्ज्वलतेजसा सहांधकाररूपतया स्थितस्य प्रकारस्य सता सहाऽसद्रूपतयाऽऽगत्य मच्चक्षुरगोचरतया त्वया सूक्ष्मीभूतेन मयि क्रियमाणानां स्मरणसमये मनसि शिथिलीभवामि मन्नीलमाणिक्य मन्नेत्रयोर्दृढग्रहणार्थमेकस्मिन्न दिनेऽनुगृहाण त्वच्छ्रीविग्रहम् । ५ । १० । ७ । श्रीविग्रहेण शयानस्य प्रकारो नाभ्यां रक्तामरसस्योपरि दिङ्मुखस्य मनसि वैलक्षण्येन स्थित्वा सृष्टिकर्माणि चाऽसदृशत्वदेकनायक

त्वं च तेषां प्रतिश्रवणं मन्मनः स्थित्वा शिथिलीभवति नयनजलनिर्झरः प्रवहति किंकरवाणि दासोऽहम् । ५ । १० । ८ । पदानां त्रयाणां याच्ञाप्रकारस्तत्र स्थित्वाऽगाधसमुद्रं भूमिमाकाशं च कृत्स्नं द्वाभ्यां पदाभ्यां पारयतो मुखं च कथनवेलायां तच्छ्रवणवेलायां सर्वदा मन्मनस्त्वदर्थमेव द्रवीभूय शिथिलीभवति क्रूरप्रबलपापोऽहं त्वया कदा वा संगमिष्यामि । ५ । १० । ९ । संगम्य जलमथनप्रकारो देवानाममृतभोजनार्थमसुराणां त्यागप्रकारमेव कृत्वा गतस्याश्चर्याणि अंतः प्रविश्य मत्प्राणं द्रावयित्वा भक्षयंति यथा तथा स्थितं त्वामनुभवितुमुपायं वद विषोरगशयन । ५ । १० । १० । नागशयनोपर्यस्मदुपकारकस्य चरणावेव शरणमस्माकमिति प्रतिदिनमेकचिंतनेन कुरुकापुरीशठकोपेन मारेण भवितुं प्रणीतेऽन्तादौ सहस्र इदमेकं दशकमध्येतुं समर्था महाख्यवैकुण्ठे आनंदं प्राप्नुयुः सर्वदा । ५ । १० । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

अर्चां च मौननियतामपहाय शौरे-
रालापयोग्यविभवे पुनरागतोऽसौ ।
चित्तस्य तद्गुणगणस्मरणे निजस्य
शैथिल्यविप्रशमनं तमयाचतान्ते ॥ ५० ॥



प्रादुर्भावादिवृत्तैर्नृपगणदमनात्पूतनाशातनाद्यै-
र्मोहार्थं बौद्धकृत्यैर्गिरिवरभजनस्वीकृतैः स्थानभेदैः ।
तेजोध्वांतादिभावाज्जलनिधिशयनाद्विक्षणाद्यैस्त्रिपथ्याः
पीयूषस्पर्शनाद्यैश्शिथिलयति हरिस्स्वीयहृच्चेत्ययोचे ॥ ५९ ॥

इत्थं कारुण्यनिघ्नं दुरितहरजनं प्रेमतीव्रं दुहानं
लोकानां रक्षितारं स्मृतिविषयमहंभावनागोचरं च ।
दीनानां सच्छरण्यं स्वरसकृतनिजप्रेष्यतावाञ्छमूचे
प्राप्तं शक्तिमदं श्रीपतिमिह शतके श्रेयसामेकहेतुम् ॥ ५९ ॥

इति श्रीसहस्रगीतौ पञ्चमशतकं समाप्तम् ।

---

## अथ षष्ठशतके

## प्रथमं सर्वदास्पृहणीयदशकम् ।

सर्वदा स्पृहणीयसमुद्रपरिवाहमुख आगत्य चरंतस्सारससंघाः केदारव्याप्तनीवारोत्तुंगे तिरुवण्वण्डूरि नित्यं वसंतं करव्याप्तचक्रं मत्फलाधरं स्वामिनं दृष्ट्वाञ्जलिं बद्ध्वा वदथ पापिष्ठाया मम प्रेम । ६ । १ । १ । प्रेममृदुकांतया सह संचरन्नीलनारद वेदयागधोपघोषितशीतलतिरुवण्वंडूरि नाथं भूमिं सर्वां भुक्तवंतमस्मत्स्वामिनं दृष्ट्वा पादं हस्ताभ्यां प्रणम्य वदत दास्या मम प्रकारम् । ६ । १ । २ । संघीभूय सर्वत्र केदारमध्ये चरंतः पक्षिसमूहाः पुष्कलसंपद्वृद्धिमति तिरुव-

ण्वंडूरि नित्यं वसंतं भ्रमच्चक्रहस्तं फलाधरं स्वामिनं
दृष्ट्वा नम्रीभूय यूयं प्रणम्य विज्ञापयत दास्या मम
दुःखम् । ६ । १ । ३ । दुःखरहितभोगे निमज्य मिलि-
त्वा संचरन्तो मुग्धहंसा विच्छेदरहितवेदघोषघोषिते
शीतलतिरुवण्वण्डूरि समुद्रसदृशविग्रहमुपकारकं कृष्णं
दीर्घव्यामोहं दृष्ट्वा शरीरे शिथिलैका ब्रवीति विज्ञा-
पयत । ६ । १ । ४ । विज्ञापनं प्रणयरोषं ज्ञात्वा सह-
चरंतो मुग्धहंसाः निविडकर्दमोपरि शंखाक्रांते तिरुव-
वण्डूरि ग्रथितस्पृहणीयशीतलतुलसीककिरीटं मत्स्वा-
मिनं दृष्ट्वा निबद्धहस्ता भूत्वा दास्या ममार्थेपि स्तुत ।
६ । १ । ५ । मञ्जुलमहमर्थये पुन्नागोपरि नित्यं वसंतो
दर्शनीयपिका उत्पन्नमत्स्यकर्दमे तिरुवण्वण्डूरि
नित्यं वसन्तं बलवच्चक्रसुंदरकरममरस्वामिनं दृष्ट्वा
प्रत्युत्तरमादायाऽनुगृह्णीध्वं मोहनिवर्त्तकमेकप्रकारम् ।
६ । १ । ६ । एकप्रकारेण गत्वा प्रविश्य ममैकं ब्रूहि
सुंदरशुक युद्धमूलसुंदरपुष्पोद्यानपरिवृते रक्तपरिसरे
तिरुवण्वंडूरि श्यामलवर्णं रक्ताधरं रक्तनयने रक्तशयौ
रक्तपादौ युद्धोन्मुखकांतिमच्चक्रं शंखं च चिह्नानि
दृढमवलोक्य । ६ । १ । ७ । दृढमवलोक्य ममैकं
ब्रूहि सुन्दरबालटिट्टिभे निविडवेतसीवकुलपुन्नागपरि-
वृतेशीतलतिरुवण्वंडूरि महाशीतलतामरसनयनं महा-



दीर्घकिरीटं चतुर्दीर्घभुजं श्यामलदृढमहामेघसदृशश्री-
विग्रहं स्वामिनम् । ६ । १ । ८ । चरणौ कराभ्यां
प्रणम्य पुष्पोपरि स्यंदमाना हंसाः प्रातः शंखघोष-
युक्ते तिरुवण्वण्डूरि नित्यं वसंतं कठिनमायं कृष्णं
दीर्घव्यामोहशालिनं दृष्ट्वा उग्रप्रबलपापिष्ठाया मम
समूहं ब्रूत वेषं स्वीकृत्यैव । ६ । १ । ९ । वेषं स्वीकृत्य
युष्मानहं याचे सुगन्धभ्रमरसंघाः स्वच्छनीरपंपोत्तर-
पार्श्वस्थतिरुवण्वंडूरि अनुपमयुद्धराक्षसप्राकारं भस्मी-
भावाय दग्ध्वा प्रीतस्य सुरर्षभस्य मामप्यस्तीति
वदत । ६ । १ । १० । विद्युद्वाहिश्रितयज्ञसूत्रवामनो
भूत्वा विस्तृतभूमिं स्वीकृतवतो बलवद्वंचकस्य चरण-
योरुपरि कुरुकापुरीशठकोपेनोक्ते गानशालिसहस्र
एतद्दशकं तिरुवण्वंडूरि माधुर्यशालिगाथारूपमभ्यसितुं
समर्था मदना विद्युन्मध्यानाम् । ६ । १ ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

आद्ये तु षष्ठशतकस्य मुनिस्तथार्त्तो
नारीसमाधिमधिगम्य निजामवस्थाम् ।
अर्चाहरिं कमपि पक्षिभिरन्तिकस्थै-
रापन्नरक्षणसदीक्षमबोधयत्सः ॥ ५१ ॥

चक्रित्वात्स्वामिभावाद्विपदि सखितया विंबदृश्याधरत्वा-
दब्धिश्यामात्मकान्त्या धृततुलसितया निर्जराधीशभावात् ।
रक्ताभास्याङ्घ्रिभावात्पृथुमुकुटतयाऽऽश्चर्यचर्याविशेषै-
र्लंकाध्वंसाच्च कृष्णं शठजिदकथयद्देशिकद्वारगम्यम् ॥ ६० ॥

---

# द्वितीयं विद्युन्मध्यानां दशकम् ।

विद्युन्मध्यानां मुग्धयोषितां त्वत्कृपां शिरसा वहंतीनामग्रेहं ततो बिभेमि राजवत्या लंकाया रक्षां दग्धवन्मायिन् त्वत्कृत्रिममहं जाने इतः परं तेन किं कुर्यां मम कंतुकं कुबेराक्षि च दत्त्वा गच्छ पूर्ण ।६।२।१। गच्छ पूर्ण त्वत्तामरससदृशनयनयुगले रक्ताधरे स्मिते च आकुलतां जनयतोर्नाशायैव तपः कृतवत्यो वयं पिच्छवन्महामयूरसदृश्यस्त्वत्कृपां शिरसा वहन्त्यः कर्णे ध्वनिं निधाय यथा वर्द्धेरन् गा नीत्वा वेणुं वादय गत्वोपविश्यैव । ६ । २ । २ । गत्वोपविश्य त्वत्कपटमजानतीनां वद पूर्ण तव रक्ताधरः पक्वफलं नयने च विपरीतमधुना वंशदीर्घपीनभुजशालिन्य एतां श्रीकृपां प्राप्ता या महाविशालसमुद्रं मथितवता स्वामिना । ६ । २ । ३ । वटस्य वर्द्धमाने दले सप्तलोकीं भुक्त्वा तदा त्वं शयितवानसि त्वन्माया उपरि दिवौकसोपि न जानंतीतः परं मम भर एव कुंतसदृशविशालनयनानां लीलापुलिनं परितः स्थित्वा गोसंघं चारयितुं शक्तोस्यस्मांस्त्वं कठिनं मा वद । ६ । २ । ४ । कठिनं मा वद पूर्ण तव कैतवं भूम्यामाकाशे च सम्यग्जानंति दृढचक्रनिर्वाहकानाद्यायुध त्वामेकं ज्ञापयाम्यहं क्षुभितमृद्वालापासु त्वत्कृपां वहंतीषु मनसि म्लायमानासु अस्मत्कलशारिकाभिश्शुकैश्च परिचयं मा कुरु । ६ । २ । ५ । वशीकरणव्यापारान्कृत्वास्मत्सालभंजिकामपहृत्यानुचितकरणेन कर्म किमपि नास्ति कृतपरिचया वयं तिष्ठामो मम भरा एतेऽनुग्रहाः सौंदर्यशालिन्य एतल्लोकत्रयपदोचितमहिषीत्वोचिता बहवः सन्ति गोष्ठ्यां मारोह पूर्ण तवापि बाल्यमेव कर्म । ६ । २ । ६ । कर्मणास्माकं करात्प्रतिमाच्छेदनं समुद्रभूमिं भुक्तवन्निर्मलापरिच्छेद्य तवाप्यवद्यमेव क्रूराण्येवोक्त्वास्मांस्त्वं खेलसि तच्छृण्वंति चेद्भ्रातरो धर्मः पापमिति न वदेयुरेकस्मिन्दिने यष्टियुद्धमेव ।६।२।७। मेलयित्वा यावन्ति यावंतश्च सांकर्यं विना विभज्य चाविभक्ताद्वितीयसंख्याशून्यकीर्त्तिप्रवाहप्रकाशज्ञानमूर्त्ते मेलयित्वास्मान्मत्सख्यो विहर्तुं गच्छाम इत्यवदन्नागतानस्मान्बाधित्वा त्वं रुणत्सि चेत्किं न वदेयुः प्रीतिशून्याः । ६ । २ । ८ । प्रीत्या मनोंतर्द्रावयित्वा त्वत्तामरसविशालनयनवीक्षणविशालवागुरायां पातयित्वा नाशितवानसि त्वच्चरणेन दयां न कृतवानस्यस्माकमल्पगृहमस्माभिः पच्यमानदर्पोदनं च दृष्ट्वा त्वन्मुखकांतौ प्रकाशमानायां स्मितं कृत्वा न स्थितवानसि ।६।२ ।९।स्थिरप्रकाशमानकिरीटवन्नेकविंशतिकृत्वो राज्ञ उद्धर्तुं जयशील दीर्घपरशुधराश्चर्यं भूमिं प्राक्सृष्टवानद्यैतद्गोपकुलं सगृहमुज्जीवयितुमाविर्भूत नीलमाणिक्यकान्ते

त्वया क्लेशमेव प्राप्नुमः सर्वदा गोप्यो वयम् । ६ । २ । १० । गोप्या मातुस्तदा नवनीतप्रसंगे क्रोधगोचरं रुदंतं नृत्यंतं पितरं कुरुकापुरीशठकोपेन स्तोत्रतया प्रणीते द्रविडमालासहस्र इदं चैकं दशकं स्वरेण सह जिह्वया सादरमनुसंदधतां नास्ति दारिद्र्यम् । ६ । २ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

तावद्विलंबमसहन्प्रणयेन रोषा
त्कृष्णं समागतमपि त्वरया विनिंद्य ।
तेन स्वसंगममनोरथिना द्वितीये
सांत्वोक्तिभिस्समनुनीय समाहितोऽभूत् ॥ ९२ ॥

धर्षित्वाद्गोपनारीजनसुलभतया लोडनादम्बुराशे
र्न्यग्रोधाग्रे शयत्वादरिसुभगतया श्रीमहीवल्लभत्वा-
न्निर्दोषोत्तुंगभावान्निरवधिकयशःसद्दशीकारिहत्त्वा-
न्मोक्षस्पर्शेच्छया च स्वयमभिसरतीत्याह कृष्णं शठारिः॥६१॥

---

## तृतीयं दारिद्र्यं संपद्दशकम् ।



दारिद्र्यं संपच्च नरकः स्वर्गश्च भूत्वा जयहेतुर्द्वेषः स्नेहश्च विषममृतं च भूत्वा बहुविधत्वेन व्याप्तं स्वामिनं ममेशानं संपत्समृद्धगृहे तिरुविण्णगरेऽपश्यम् । ६ । ३ । १ । हृष्टं सुखं दुःखं क्षोभा वैशद्यं च भूत्वा कोपः प्रसाद आतपश्छाया च भूत्वा स्थितस्य द्रष्टुमशक्यस्य



स्वामिनो ममेशानस्य ग्रामः स्वच्छतरंगवन्नदीपरिवृतं तिरुविण्णगरं समीचीननगरम् । ६ । ३ । २ नगरं जनपदाश्च ज्ञानं जडं च भूत्वाऽनुपमव्याप्ततेजो भूत्वांध-कारो भूत्वा भूमिर्भूत्वाऽऽकाशो भूत्वा शिखरगृहपरिवृतं तिरुविण्णगरमाश्रितस्योपकारकस्य दीप्तिशालिकीर्तिं विना नास्ति यावतामपि पुण्यम् । ६ । ३ । ३ । पुण्यं पापं संश्लेषो विश्लेषश्चेत्येवं भूत्वा स्मृतिर्विस्मृतिर्भूत्वा सदस-त्तया तच्च भूत्वा स्थितस्य दृढगृहपरिवृतं तिरुविण्णग-रमाश्रितस्योपकारकस्य कृष्णस्य भोग्यकृपामेव पश्यत कैतवमेव । ६ । ३ । ४ । कैतवार्जवे नीलश्वेतौ भूत्वा सत्या-नृत्ये बाल्यवार्द्धके नूतनपुरातने च भूत्वा निर्मितदृढप्रा-कारपरिवृतं तिरुविण्णगरमाश्रितेनोपकारकेण निर्मित-मारामं पश्यन्तु महद्भिर्देवैर्युक्ता त्रिलोकी । ६ । ३ । ५ । त्रयो लोका भूत्वा तद्व्यतिरिक्तो भूत्वा प्रीतिर्भूत्वा कोपो भूत्वा पुष्पे वर्द्धमानांगना भूत्वाऽक्ष्मीर्भूत्वा कीर्तिर्भूत्वाऽपवादो भूत्वा देवैरादरेण सेव्यमानं तिरुविण्णगरमाश्रित उपकारकः पापिष्ठस्य मम मनसि नित्यं वसत्परं ज्योतिः । ६ । ३ । ६ । परं ज्योतिर्विग्रहो भूत्वा मालिन्याकान्तविग्रहो भूत्वा सूक्ष्मीभूयाप्याविर्भूय च स्थित्वा कैतवानि कुर्वन्दिव्यैः शिरोभिस्सेव्यमानं तिरुविण्णगरमाश्रित उपकारक-

स्तस्य परत्वशालिपादं विना नास्ति कस्यापि दृढशरणम् । ६ । ३ । ७ । दृढशरणं सुराणां भूत्वाऽसुराणामुग्रमृत्युर्भूत्वा स्वचरणच्छायाया अधो लोकमवस्थाप्यानवस्थाप्य च दक्षिणस्याः शरणं दिशस्तिरुविण्णगरमाश्रित उपकारको मम शरणं मत्कृष्णो मया दासवान्मम पिता । ६ । ३ । ८ । मत्पिता मदसाधारणो भूत्वा सखी भूत्वा मां प्रसूता भूत्वा स्वर्णपिता मणिपिता मुक्तापिता मम पिता च भूत्वा विद्योतमानस्वर्णप्राकारपरिवृतं तिरुविण्णगरमाश्रितः पिता स्वसदृशरहितः पिता दत्तवान्स्वचरणच्छायाम् । ६ । ३ । ९ । छायातपोऽणुत्वं महत्त्वं ह्रस्वत्वं दीर्घत्वं भूत्वा जंगमं स्थावरमन्यच्च भूत्वाऽतच्च भूत्वा सुग्धालापमुखभ्रमरवृद्धिस्थाने तिरुविण्णगरे नित्यं वसत उपकारकस्य चरणौ विनैकशरणरहिता वयं पश्यन्तु।६।३।१० पश्यन्तु लौकिका इति नेत्रयोरग्रे प्रसृतचरणयुगलं कुरुकापुरीशठकोपेनोक्ते आज्ञासहस्रे तिरुविण्णगरदशकमभ्यस्यन्तः संकोचमंतरा दिविषदां सर्वदा भवेयुर्गुरवः । ६ । ३ । ११ । श्रीदिव्यसूरिचरणावेव शरणम् ।

कोपं मम प्रणयजं प्रशमय्य कृष्णः
स्वाधीनतामतनुमेति सविस्मयः सः ।
स्वीयां विरुद्धजगदाकृतितां च तेन
संदर्शितामनुबभूव मुनिस्तृतीये ॥ ५३ ॥



संपद्दारिद्र्यभावादसुखसुखकृतेः पत्तनग्रामभावा-
त्पुण्यापुण्यादिभावात्कपटऋजुतया सर्वलोकाधिभावात् ।
दिव्यादिव्याङ्गवत्त्वात्सुरदितिजगणस्निग्धशत्रुत्वकीर्त्या
छायाच्छायादिभावादघटितघटनं प्राह कृष्णं शठारिः ॥ ६२ ॥

---

## रासे गोपीभिस्सह हस्तसंयोजनदशकम् ।



रासे गोपीभिः सह हस्तसंयोजनं च पर्वतस्यैकस्य धारणं च बलवन्नीरे ह्रदे नागनिग्रहश्चैतत्प्रभृतीन्यन्यानि बहूनि उरगशयनस्योपकारकस्य तस्य मायाकर्माण्येव प्रलप्य रात्रिं समीचीनं दिवसं च न विरमामि का न्यूनता मम ।६।४।१। गानमधुरवेणुनादनं गोगणचारणं च मत्स्यश्रीमन्नयनायाः परिमलकुसुमकेशिन्या नीलाया भुजसंश्लेषणमन्यानि च बहूनि मायालंकारस्योपकारकस्य तस्य चेष्टितानि स्मृत्वा मनसि द्रवीभूतस्य स्नेहेन कालो व्यतीतो मम को वा लोकस्तुल्यः । ६ । ४ । २ । अनुपममल्लसंहरणं गोगणचारणं च दीर्घदीर्घहस्तशिखरमहाकुंजरहिंसनं चैतादृशान्यन्यानि च दीप्तिशालिज्योतिष उपकारकस्य तस्य चेष्टितानि स्मृत्वा प्रलप्य सर्वदाऽनुभवेन सर्वस्य कालस्य क्षेपमलभे मम का वेतः परं पीडा । ६ । ४ । ३ । पीडायै गोप्यासुलूखलेन सह बध्यंत्यां भीतत्वं च

वंचकस्त्रियं नाशयितुं दुग्धपानं चागच्छच्छकटभंगाय ताडनं च देवालंकारस्योपकारकस्य तस्य कर्म स्मृत्वा मनसि द्रुतोऽनुभवितुं कालैर्युक्तोस्मि मम किमितः परमपेक्षितम् । ६ । ४ । ४ । साभिलाषं देवेषु याचमानेष्वागत्य जननं च स्थूलांधकारमुखे उत्पत्तिदिने मातरि विलपंत्यां गत्वा तत्रैकगोपकुले प्रवेशनं च दर्शनं विना वृद्धिं प्राप्य कंसनाशाय वंचनाकरणं चेदानीमहं प्रलपितुं लब्धवान्मम किं शात्रवमस्ति । ६ । ४ । ५ । युद्धोन्मुखपक्षिविदारणं च ककुद्मतां वृषभाणां संहरणं च औन्नत्यशालिवनकुन्दभंजनं चैतत्प्रभृतीन्यन्यानि बहूनि वैशाल्यशालिभूमिं मितवतो मायिनो मम पितुर्माया एव दिवा रात्रं स्तोतुं प्राप्तवान्मम किम्मनोदुःखम् । ६ । ४ । ६ । मनोदुःखेन मलिनमानुषजातौ स्वयं जनित्वा स्वस्याभिमतं रूपं प्रगृह्य स्वयं स्वस्य क्रोधमुपसंहरतः क्षेत्रतुलसीकिरीटमालावक्षसो मत्पितुस्तस्य माया एव स्मरच्चित्तवानस्मि ममेतः परं को वा सदृशो विशालपृथिव्याम् । ६ । ४ । ७ । विशालपृथिव्या सहाकाशे विस्मयमाने पूर्णमहायुद्धानि कृत्वा बाणस्य सहस्रभुजानां लवनं चैतत्प्रभृतीन्यन्यानि बहूनि ब्रह्मचारी भूत्वा भूमिं गृहीतवतो मायिनो मत्पितुस्तस्य माया एव साक्षात्कुर्वन्मनोवानस्मि ममेतः परं को वा क्षोभोऽस्ति । ६ । ४ । ८ ।



मिश्रितं सप्त सागरान्सप्त पर्वताँल्लोकान्ससाप्यतिक्रमयितुं गमयित्वा सर्वत्र रथेन सह गतवतो माया चैतत्प्रभृतीन्यन्यानि बहूनि दक्षिणकरे चक्रवन्तं वामकरे शंख एतद्वंतं श्यामलवर्णं विकृतं कर्तुं क्षमया जिह्वया युक्तस्य मम तुल्योस्ति किमेतद्भूमेरुपरि । ६ । ४ । ९ । भूमेरुपरि महाभारस्य निवृत्तय एकभारतमहायुद्धं कृत्वा मायाः कृत्वा सेनां केवलस्थलां कर्तुं मंत्रयित्वा गत्वा व्योमोपरि स्वधामैव प्रवेष्टुमादरणवतो ज्योतिषस्तस्य चरणावुपगम्याहं सेवितुं प्राप्तु मम को वाऽपरो नायकः । ६ । ४ । १० । नायकः सकलसप्तलोक्या भूत्वा सकलसप्तलोकीं स्वस्यान्तः प्रवेशो यथा स्यात्तथा निधायोद्गीर्य तद्रूपो भूत्वाऽतद्रूपश्च भूत्वा स्थितस्य केशवस्य चरणयुगलस्योपरि कुरुकापुरीशठकोपेनोक्ते परिशुद्धसहस्र एतद्दशकेन भक्ता भवेयुर्दोषं विना । ६ । ४ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

आनंदशीतललितवागनुसंदधीय
कृष्णस्य वीर्यचरितान्यहमादरेण ।
इत्थं पुरा स्वयमपेक्षितवान्मुनिस्त-
ल्लब्ध्वा समोस्ति न ममेत्यवदच्चतुर्थे ॥ ५४ ॥

रासक्रीडादिकृत्यैर्विविधमुरलिकावादनैर्मेढ्रभंगै-
र्गोपीबन्धार्हभावाद्व्रजजननमुखैः कंसदैत्यादिभंगैः
प्रादुर्भावैर्निहीननिष्प्रसुरमुजवनच्छेदमुख्यैश्चरित्रै-
राकर्षत्सर्वचित्तं हरिरिति कथयामास कारिप्रसूनम् ॥ ६३ ॥

---

# पंचमं दोषरहितदशकम् ।



दोषरहितमहामणिगृहैरुन्नतं तुलैविल्लिमंगलं [प्रणमं-
तीमिमां यूयमितः परं मातरो युष्माकमाशा नास्ति
त्वजत धवलसुन्दरशंखश्चक्रमिति वदति तामरसविशा-
लनयने इति वदति इंदीवरसुंदरविकासिनयनयोर्जलपू-
र्त्तिर्यथा स्यात्तथा स्थित्वा स्थित्वांतर्दह्यते । ६।५।१।
संकीर्णध्वन्युत्सवध्वनियुक्तं तुलैविल्लिमंगलं नीत्वा
प्रवेश्यामृतमृद्वालापां यूयं युष्मदाशानाशं व्यघटयत
स्तंभशालिसदृशा तिष्ठति अन्यत्रेयं देवदेवोपकारक
इत्येवं स्फुरदधरेण सह नयनयोर्जलपूर्णा शिथिला
परवशा द्रवति । ६।५।२। तीरव्याप्तविशालोद्यानशी-
तलजलस्थलयुक्ते तुलैविल्लिमंगले नीत्वा प्रवेश्य
वार्त्ताग्राहिमधुरालापां यूयं युष्मदाशानाशं व्यघटयत
तरंगशालिसमुद्रशयनं च दिग्भूम्योर्व्याप्यमाणं च
गोगणचारणमेव प्रलप्य विशालनयनजलपूर्त्तिस्तिष्ठति।
६।५।३। सुप्रतिष्ठचतुर्वेदनिर्वाहकवृद्धिस्थानस्य
तुलैविल्लिमंगलस्य दर्शनानंतरं विधेयत्वं किंचिदप्य-
त्यजदत्यरिच्यत पश्यतेयं मातरोऽभ्यस्यमानविद्याः सर्वा
नीलसागरवर्णः कृष्ण उपकारक इत्येवं संकोचेन किय-



तापि शून्या हर्षं हर्षमन्तर्निर्वृता शिथिला भवति ।
६।५।४। शिथिलां कांतिमन्मुखीं मुग्धां तुलैवि-
ल्लिमंगलं नीत्वा प्रवेश्याऽऽभरणशालिज्योतिरक्तामर-
सनयनस्योपकारकस्योपवेशं प्रादर्शयत वर्षपातसदृ-
शनयनजलेन सह तदा प्रभृति मोहं प्राप्येयं प्रविश-
च्चिन्ता मातरः प्रणमति तां दिशं सम्यगवलोक्य
।६।५।५। दृश्यमानेषु पार्श्वेषु सर्वेषु सेक्षुनीवारा-
भिवृद्धियुक्तरक्ततामरससमृद्धिमच्छीतलताम्रपर्ण्युत्तरतटे
उत्कृष्टं तुलैविल्लिमंगलं पश्यति चैतां दिशं विहा-
यान्यन्न पश्यति सर्वदा प्रतिदिनं मुखस्थं वाचकमपि
मणिवर्णस्य नामेवेयं मातरः । ६ । ५ । ६ ।
मातरः सुंदरमहामयूरी बालमृगीयमस्मत्परं गता मम
वार्त्तां शृणोति किं तुलैविल्लिमंगलमित्येतद्विना प्राग-
नुष्ठितो विधिर्वा मेघवर्णस्य माया वा तस्य चिह्नं
श्रीनाम चास्या मुखगते सुशिक्षिते । ६।५।७।
सुशिक्षितो वेदो यागश्च श्रीमहालक्ष्मीश्चैतत्समृद्धिम-
द्वृद्धिमत्ताम्रपर्ण्युत्तरतटे उत्कृष्टं तुलैविल्लिमंगलं नील-
विशालनयना हस्ताभ्यां प्राणमत्तदा प्रभृत्यद्यपर्यंतं
स्थित्वा स्थित्वारविंदलोचनेत्येवं शिथिला व्याकुली-
भवति । ६।५।८ व्याकुलीभूय प्रतिदिनं प्रलप्येयं
नयनजलेषु प्रवहत्सु तरवोपि यथा कृपां कुर्युस्तथा

मणिवर्ण हा इत्याक्रंदति तुरंगमुखविदारकस्य नित्यवासस्थानं तुलैविल्लिमंगलमित्युक्त्वा स्वकरौ निबध्य प्रणमति तद्ग्रामश्रीनामाभ्यासादनंतरम् । ६ । ५ । ९ । नीलादेवी वा भूमिमहादेवी वा श्रीलक्ष्मीर्वोत्पन्ना का वा माया इयं दीर्घव्यामोहशालिन्नित्येव स्थित्वाऽऽक्रंदति हा प्रथममागत्य तस्य स्थित्वोपविष्टस्य नित्यवासस्थानं तुलैविल्लिमंगलं शिरसा प्रणमति तद्ग्रामश्रीनामश्रवणं चिन्ता । ६ । ५ । १० । चित्तेन वचसा कर्मणा च देवनाथमेव माता पितेत्याश्रितवता समीचीनकुरुकापुरीशठकोपेनानादिसहस्र एतत्तुलैविल्लिमंगलविषये उक्तं समीचीनद्रविडदशकमभ्यसितुं शक्ता दास्यं कुर्युः श्रियः पत्युः । ६ । ५ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

तस्यापि मानसतयानुभवस्य बाह्य-
संश्लेषणैकपरचित्तमनश्शरीरः ।
आत्मानुरक्तजनमात्मनि निस्पृहत्वं
निन्येधिपंचममति प्रवणोच्युते सः ॥ ५५ ॥

शंखाचक्रात्ततश्च त्रिदशसुरतया सिंधुशायित्वभूम्ना
तद्वचोदारभावादरुणसरसिजाक्षत्वचिह्नेन देवः ।
देवीभिस्सेव्यभावादतिसुलभतया स्वेष्वतिस्निग्धभावा-
द्बन्धुभ्यः स्वान्मुरारिर्विघटयति हठादित्यवोचच्छठारिः॥ ६४ ॥

---



## षष्ठं व्यामोहवते दशकम् ।



व्यामोहवते भूमिं मितवते नायकाय नीलश्यामलवर्णमेघन्यायाय सुंदररक्ततामरसनयनाय मम समधुकुसुमसुगंधिकेशा त्यक्तवती शंखम् । ६ । ६ । १। शंखचापासिगदाचक्रहस्ताय रक्तफलाधराय रक्ततामरसनयनाय मधुविकासिशीतलसुन्दरतुलसीककिरीटाय मत्कुमारी त्यक्तवती सुंदरं रूपम् । ६ । ६ । २ । रूपेण श्यामलाय दीर्घलोकादनप्रकाराभिधाय्यधराय बालाय मायिने भ्रमच्चक्रहस्ताय मम निबिडमहाकेशिनी त्यक्तवती महत्तवम् । ६ । ६ । ३ । महत्त्ववच्चतुर्मुखं सृष्टवते धनवतीं भूमिम्मितवते नायकाय देशवतां राज्ञां दौत्यं कृतवते पूर्णाय मम विपुलजघना त्यक्तवती स्वभावम् । ६ । ६ । ४ । स्वभाववद्वेदमुपदिष्टवते परस्मै मृत्प्रचुरभूमिमुद्धृतवते वराहाय स्वच्छजलशयनमद्देवनायकाय मम चक्षुराभरणककेशा त्यक्तवती विद्याम् । ६ । ६ । ५ । कल्पकोद्यानसदृशसमीचीनबहुभुजाय स्वर्णतेजःपर्वतसुन्दरानुरूपकिरीटाय समीचीनानेकतामरसनवीनकुसुमहस्ताय मम चापभ्रूलता हारितवती शरीरम् । ६ । ६ । ६ । शरीरसुघटितनानाभरणसम्यगलंकृताय फणवदुरगशयने

निद्राणाय हस्तपादे रक्ताय कृष्णायोपकारकाय मम सुता त्यक्तवती स्वस्याश्छायाम् । ६ । ६ । ७ । पतनाय कुंदं भग्नवते एकाकिने मायाशकटं पादेन ताडितवते नायकाय पिशाचीशवभावाय दुग्धं पीतवते उपकारकाय मम सुगंधिकेशपाशा त्यक्तवती सौंदर्यम् । ६ । ६ । ८ । सौंदर्यपूर्णालंकाराय मायावामनायोन्नतकांतिमत्पर्वतसदृशरक्तकांतिमन्मूर्त्तये दर्शनीयापरिच्छिन्नाविर्भावाय मत्काकुत्स्थाय पूर्णाय ममाभरणालंकृतमृदुस्तनी त्यक्तवती सौंदर्य्यम् । ६ । ६ । ९ । सौंदर्यपूर्णदीर्घकिरीटस्थदर्शनीयशीतलतुलसीकाय मल्लयुद्धकुद्धुजाय मायिन उपकारकाय स्थावरबहुरूपतया तिष्ठते मायिने मम विद्यावती त्यक्तवती कृत्स्नम् । ६ । ६ । १० । परिमलोज्ज्वलोद्यानसमीचीनवेंकटनिर्वाहकं रक्षोज्ज्वलसुंदरकुरुकापुरीशठकोपस्योक्तौ संदर्भसुंदरसहस्र एतद्दशकमभ्यस्यन्तोऽधिकोज्ज्वलदिविपद्भोगं भुञ्जीरन् । ६ । ६ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

तस्मात्परमवणताविभवात्परस्मि-
न्पुंस्येव कुंचितमतिः पुरुषार्थसारे ।
स्वस्य स्वकीयविषयेष्वखिलेषु षष्ठे
स्वीयत्वबुद्धिरवशाद्गलितेत्यवोचत् ॥ ५६ ॥



पारम्पर्याच्च पंचायुधविहतिसुरैर्ब्रह्मणस्सृष्टभावा-
द्देवानां स्वामिभावादखिलसुभगतयालंकृतेः कुन्दभङ्गात् ।
प्रादुर्भावैश्च सर्वान्तरनिलयतयाहंममत्वेति धैर्यं
चतुर्यादीनि नृणामपहरति हरिश्चेत्यभाणीच्छठारिः ॥ ५७ ॥

---

## सप्तमं भुज्यमानमन्नदशकम् ।

भुज्यमानमन्नं पीयमानं जलं चर्व्यमाणं तांबूलं च सर्वं कृष्णः स्वाम्येवेत्येवमुक्त्वोक्त्वा नेत्रयोर्जलानि प्रवहंत्या भूमौ तस्य गुणान्संपत्समृद्धिमद्ग्रामं पृष्ट्वा निश्चित्य मद्बालमृग्या गंतव्यो ग्रामस्तिरुक्कोलूरेव । ६ । ७ । १ । ग्रामेण देशेन लोकेन च स्ववत्तस्य नाम्नो मालानामेव प्रलपनार्थं मर्यादां महतीमतिलंघ्यानुरूपसत्संपद्युक्तकेदारयुक्ततिरुक्कोलूरेव प्रविशेत्किं वदत पापिष्ठाया मम लताशारिका । ६ । ७ । २ । शारिकाहरितशुक कंदुकलवुशूर्पपुष्पपेटिकाः सर्वा लक्ष्मीकांतस्य श्रीनामान्येवाकुश्योज्जीवंती मम प्रतिमा गत्वेतः परं शीतलकेदारतिरुक्कोलूरि बिंबाधरे स्फुरति वर्षनयनेन सह किं कुर्याद्वा । ६ । ७ । ३ । गुणहीनेति वदेयुर्गुणाधिकेति वदेयुर्वा बहुजल्पाकाः स्त्रियः पार्श्वग्रामस्थाश्चाऽहो संपत्पूर्णस्य तस्य शयनस्थानं तिरुक्कोलूरमेव मृदुमध्ये म्लायति बालमृगी गंतुमपुनक । ६ ।

७।४।अभिनिविश्य शिथिलशिथिला क्रीडायां न निविशते मम बालदेवी गत्वेतःपरं स्वश्रीव्यामोहशालितिरुकोलूरि पुष्पमयोद्यानानि तटाकांस्तन्मंदिरं च दृष्ट्वा मनस्यंतःशीता कथं म्रियताद्य।६।७।५। अद्य ममानुपयुक्ता दूरं गता बालमृगीतःपरं गत्वा दक्षिणदिक्तिलकसदृशे तिरुकोलूर्यैव प्रविश्य स्वश्रीव्यामोहवतः श्रीनयने रक्ताधरं च दृष्ट्वा स्थित्वा स्थित्वा शिथिलीभवेद्दीर्घनयनयोर्जलपूर्णा।६।७।६। स्वजलनेत्रेण मुह्यन्मनस्का भूत्वा रात्रिं समीचीनदिवसं च दीर्घव्यामोहशालिन्नित्याक्रुश्येतः परं गत्वा विवृद्धसंपत्तच्छयनस्थले तिरुकोलूरि नम्रीभूय नम्रीभूय गत्वा कथं प्रविशेदार्त्ता।६।७।७। भज्यमानसूक्ष्ममध्यन्यस्तहस्ता खिन्नखिन्नार्द्रमनस्का सतीनयनजले परिपूर्णे गच्छेद्वा म्लायत्सुंदरकुसुमांगनानायकस्य तिरुकोलूर्यैवार्द्रचित्ताऽस्मांस्त्यक्तवती मम कुमारी।६।७।८। कार्याणि समचीनानि तानि पश्यति चेन्मम कृष्णायेत्यार्द्रा सती तिष्ठेदेतस्मिन्सर्वेस्मिंस्तिष्ठति इतःपरं गत्वा ग्रामे नानापवादानुक्त्वा वोषति तिरुकोलूरमेवानुरूपाभरणा गता मामीषदपि न स्मरति।६।७।९। न स्मर्तुं शक्नोमि देवा दीर्घनयना बालमृगीतःपरं गत्वा सर्वलोकस्वामिनमरविंदलोचनं क्षणमात्रमपि न त्यज्यति तद्वासस्थानं



तिरुकोलूरमेव कुलस्य महापवादमपि न स्मरति गंतुं निदधत्।६।७।१०। निक्षिप्तमहानिधिं मधूसूदनमेवाक्रुश्य विकसत्स्तबकोद्यानपरिवृतकुरुकापुरीशठकोपेनोक्ते दशशत एतद्दशकं तद्वासस्थानंतिरुकोलूर्यैव मनो निवेश्यानुसंदधाना उज्ज्वलं श्रीमल्लोकं नियमयेयुः।६।७।११।

श्रीदिव्यसूरिचरणावेव शरणम्।

कृष्णेन धारयितृपोषकभोग्ययोगी
प्राप्तावतित्वरितधीरखिलान्विहाय।
स्यादप्यलब्धफल इत्यवहीयमानः
पार्श्वस्थितैर्मुनिरभूदधिसप्तमं सः॥ ५७॥

पारम्याद्रव्यभावात्स्वगभिहितिमुखैः श्रीशतैश्वर्यभूम्ना
स्नेहिस्वादाभिरूप्याच्छ्रितपरवशतासर्वलोकेशताद्यैः।
धृत्यादेरादिहेतुं मुरमथनमथ व्याहरत्संश्रितानां
वेदानागस्त्यभाषावपुष उदधरच्छ्रेयसे देहिनां यः॥ ६६॥

---

# अष्टमं श्रीमल्लोकं नियमतदशकम्।

श्रीमल्लोकं नियमयत भुवनं सर्वं नियमयत सुसमीचीनपक्षिसमूहाः पापशालिन्यहमर्थये पूर्वं लोकान्सर्वान्सृष्टवतो मेघवर्णस्य कृष्णस्य मम समीचीनमपहृतवत उपकारकस्य तस्य मम स्थितिमुक्त्वा।६।८।१। अंजनयुक्तदीप्तिमद्दीर्घनयनानां सखीजनानां

पुंरतो मम कर उपविश्य घृतप्लुतं मधुरमोदनं सततं पयसा
सह न भुंजीध्वं किं करस्थचक्रं मम फलाधरं स्वामिनं
दृष्ट्वा शरीरसंगिप्रेमोक्ता शुकाः सत्वरं शीघ्रमागत्य ६।८।
२। शीघ्रमागत्य मम केशपाशोपरि कांतिमन्महाकुसुमं
धमत मिलितभ्रमरसमूहाः कुरुदेशवतां पंचानामर्थे नृत्य-
तुरंगममहारथेन सेनां भस्मीभावाय हिंसितवत उपकार-
कस्य धृतशीतलतुलसीभुक्तवत्परिशुद्धमध्वास्यैस्सह ।६।
८।३। परिशुद्धमध्वास्यैः सहागत्य मम यौथिकानामु-
परि भृंगविशेषाः पुष्पमधु भोक्तुं गच्छथ चेत्पापिष्ठाया
ममानृतं कृत्वा दूरं गतं महामधुस्यंदिशीतलतुलसी-
ककिरीटं दिविपन्नायकं दृष्ट्वाऽस्माकमयं किमुचितप्र-
कार इति वक्तव्यं युष्माभिः। ६ । ८ । ४ । युष्माक-
महं वदाम्यागच्छत मया वर्द्धिताः शुका उग्रनयनं पक्षिणं
संचार्यागत्य पापिष्ठाया मम मनोपहृतवंतं रक्तनयनं
कालमेघं रक्ताधरं सुंदरकल्पकं कुत्र वा गत्वा दृष्ट्वाऽयं
किं दयावतां प्रकार इति वदत ।६।८।५। मदीयस्फुरत्सू-
त्रवक्षा मच्छ्यामलमत्स्वामी मत्कृष्णः स्वीयस्थिरदीर्घ-
चरणयोरुपरि शीतलतुलसीमस्मान्विना न प्रयच्छेद-
भ्यस्यतेति युष्मभ्यं मया शिक्षित्वा दत्तमुत्तरमुक्त्वाऽऽगच्छत
क्रूरपापया मया वर्द्धिता बालशारिकाः । ६ । ८ । ६ ।
अतसीसमानवर्णस्य पुण्डरीकसदृशनयनस्य यावंति



यावंतश्च भूत्वा स्थितस्य मायिनो मच्चक्षुपकारकस्य
तुरंगं प्रबलास्ये विदारितवतो मधुसूदनस्य मद्दापित-
मुक्ता सालभंजिका अपनेतुं शक्नुत पापिष्ठाया मम
दुःखम् । ६ । ८ । ७ । वैवर्ण्यं प्राप्यैवं पापिष्ठाहं कति-
कल्पान्क्लिश्यामि निर्दोषपक्षश्वेतसारस कृपां कृत्वैक-
स्मिन्दिने कलंकरहितनीलज्योतिः केशबंधं दिविष-
न्नायकं दृष्ट्वा क्लिश्यति त्वां विनान्यावलोकनवती न
भवति वस्त्वंतरे । ६ । ८ । ८ । वस्त्वंतरेणैकेनोपायेन
पापिष्ठाहं केनचिच्छून्योस्मि जलतरंगाणामुपरि चरि-
त्वाऽऽहारमन्वेषमाणा बृहन्नारदसंघाः नीलसंघातवन्म-
हामेघसदृशं कृष्णं दिविषन्नायकं दृष्ट्वा वार्त्तां आदाय
कृपां कृत्वा वदत प्रतिदिनमागत्य स्थित्वा । ६ ।८। ९ ।
आगत्योपविश्य युष्माकं मणिपुरुषस्त्वं च सर्वेंतरं
किंचिदपि विना पुष्पोपरि संचरंत्यो हंस्यो मच्छ्रीवक्षसं
मामेवं प्रकारेयं पश्येति मंत्रयित्वैकं ज्ञापयित्वा वदत
प्रतिवचांसि । ६ । ८ । १० । वचांसि परिशोध्य
मधुसूदनस्वामिनश्चरणयोरुपरि परिमलशालिपुष्पोद्या-
नपरिवृतकुरुकापुरीशठकोपेन प्रणीते प्रादुर्भूते सहस्र
एतदेकं दशकमध्येतुं शक्तास्स्रोतोमुखसूक्ष्मवालुका वद्र-
वीभवेयुर्जलीभूताः । ६ । ८ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

अप्येवमात्मफलदानविलम्बवन्त-
मालोक्य शौरिमथ यत्र च कुत्र चापि ।
आवेद्य मत्स्थितिमधीनविभूतियुग्मा-
स्स्यातेत्ययाचत सतो मुनिरष्टमेन ॥ ५८ ॥

लोकस्रष्टृत्वशक्त्यायुधसुभगतया जिष्णुसारथ्ययोगा-
त्स्रग्भ्राड्वेशभावाद्गरुडरथतया स्वाश्रिते पक्षपातात् ।
कान्त्या साम्राज्ययोगादवतरणदशास्पष्टपारम्यतश्च
स्वीयायत्तस्वभूतिद्वयमथ कथयामास देवं शठारिः ॥ ६७ ॥

---

## नवमं नीरं भूत्वा दशकम् ।



नीरं भूत्वा भूमिर्भूत्वाग्निर्भूत्वा वायुर्भूत्वा दीर्घाकाशो भूत्वा श्रीपूर्णतेजसी उभे भूत्वा शिवो भूत्वाऽजो जातोसि तैक्ष्ण्यपूर्णचक्रधवलशंखौ धृत्वा पापिष्ठस्य मम पुरत आयाह्येकस्मिन्दिने भूमिराकाशश्च यथा वर्द्धेताम् । ६ । ९ । १ । भूमिराकाशश्च यथा वर्द्धेतां वामनो भूत्वा बलं प्रदर्श्य भूमिमाकाशं च गृहीतवन्मायिन्स्वामिन्नभिगम्य त्वामहं दृष्ट्वा प्रीतो यथा नृत्यामि तथोपगम्यैकस्मिन्दिने पृथिव्यां संचर । ६ । ९ । २ । भूम्यां चरित्वा स्थित्वा शयित्वोपविश्याप्यतिबहुकालेषु प्रतियुगं जीवान्रक्षितवन्नलंकारशालिश्रीमहालक्ष्म्या सह त्वामनुपगम्यातिबहुदिवसेषु दासोहमिति परमप्यार्त्तो भवामि किम् । ६ । ९ । ३ । शिथिलं सद्भग्नं शकटा-



सुरशरीरं द्विधा भिन्नं यथा नश्येत्तथा श्रीचरणं नियमितवन्स्वामिन्विवृद्धेषु ब्रह्मशिवेंद्रेषु दिविषत्सु परितो व्याप्तेषु विद्योतमान एकस्मिन्दिने द्रष्टुमागच्छाकाशस्योपरि । ६ । ९ । ४ । आकाशस्योपर्युपविशन्पर्वतस्योपरि तिष्ठन्समुद्रे शयानो भूम्यां संचरन्नेतेषु सर्वत्रांतर्हितो नित्यं वसन्संख्याया उपरि वर्त्तमानब्रह्माण्डवान्ममात्मन्यंतरुपरि वर्त्तमानो रूपमप्रदर्श्यांतर्धापयसीह । ६ ।९।५। प्रसार्यैकं पादं निधाय तस्याधस्तात्समुद्रं भूमिं सर्वामाक्रम्यैकेन पादेन सर्वलोकं सृष्टवन्मायिन् त्वां दिदृक्षमाणः प्रयासं कृत्वा दीर्घं कालमग्निना संगतं मधूच्छिष्टं भूत्वा लोके संचरेयं किम् । ६ । ९ । ६ । लोके प्रवर्त्तमानकर्मगतिर्भूत्वा लोकोपि भूत्वा लोकस्यैक आत्मापि जातोसि अंडाद्बहिः संख्यातीतदशदिग्व्याप्तारूपिभूतः संख्यातीताज्ञानवतो मम कृपां कुरु । ६ । ९ । ७ । अज्ञानवतो मम कृपां कुरु ज्ञानिप्राणभूतोसि परिमलशालिज्योतिर्मूर्त्ते दासस्य मम दीर्घव्यामोहशालिन्सामर्थ्यं कृत्वा मम बहिः कृत्वेतःपरमपि नाशयसि किमन्यत्किमप्यजानतो दासस्य मम मनो व्याकुलं यथा । ६ । ९ । ८ । मनो व्याकुलं यथा स्यात्तथा पंचानां बाधायोग्यमल्पसुखं पापिष्ठं मां बहुत्वं प्रदर्श्य नाशयसि किमाक्रम्य भूमिं स्वीकृतवतोविशा-

लतामरसयोरेवाह्वानकाल इतः परमपि ह्रस्वो न भवे-
त्किम् । ६ । ९ । ९ । अह्रस्वोऽदीर्घो नाशरहितोऽनेक-
कालं संकोचविकासशून्योपरिमितानन्दः प्राप्तोपि
पुनर्लाभशून्यस्य मायिनस्तवैव दासभावरूपस्याल्प-
कालस्य सदृशः किं हंत सम्यङ्निरूपणे । ६ । ९ । १० ।
ज्ञानेन स्मरणेन चिंतनेनापरिच्छेद्यस्य श्रियः पत्युरसा-
धारणदासदासदासेन शठकोपेन विशदं प्रणीत एकस्मि-
न्सहस्र एतद्दशकमसाधारणदासं कुर्याल्लोकान्भुक्तवतः
। ६ । ९ । ११ ॥ श्रीदिव्यसूरिचरणावेव शरणम् ।

आलोकनेपि विषयस्य भृशं विभमो
रूपे हरेस्सकललोकमये निराशः ।
अप्राकृते वपुषि लोलमनास्तमुच्चैः
प्राकारयत्प्रलपितैर्नवमे शठारिः ॥ ५९ ॥

सर्वात्मत्वाज्जगत्याः क्रमणत उत संरक्षणाद्दिष्टपानां
शत्रुध्वंसात्परत्वाद्यभिमतदशया पंचधावस्थितत्वात् ।
निर्वाहादण्डकोटया बुधदयिततया सर्वशीर्षाग्रिदाना-
न्मोक्षेच्छोत्पादकत्वाद्धरिमथ शठजिद्वक्त्यनर्हद्वियोगम् ॥ ६८ ॥

---

## दशमं लोकग्रासिविपुलास्यदशकम् ।

लोकग्रासिविपुलास्यावधिशून्यकीर्त्ते स्वामिन्नभि-
वृद्धतेजःपरिवृततेजोमूर्त्ते महान्दासस्य मम पूर्णप्राण
तिलकं लोकस्य भूत्वा स्थिते श्रीवेंकटे मत्स्वामिन्कु-



लागतानादिदासस्य मम त्वच्चरणप्राप्तिप्रकारं वद । ६
१० । १ । खंडः सद्रस्म सन्मृद्रूपं यथा स्यात्क्रूरबल-
वदसुरकुलं सर्वं तथा क्रुध्यज्ज्वलच्छ्रीनेमिदक्षिण देवा-
धिपते पंकपूर्णसरस्सु तामरसरक्ताग्निर्विकसति यत्र
श्रीवेंकटस्वामिन्नक्षयस्नेहिनो दासस्य मम त्वच्चरण-
प्राप्तिप्रकारमनुगृहाण । ६ । १० । २ । वर्णमोहजनक
सुंदरमेघवर्ण मायिन्स्वामिन्मनसि प्रविश्य मधुरीभवद-
मृतानिमिषाणामधिपते स्वच्छसमीचीननिर्झरा यत्र
मणिस्वर्णमुक्ताश्चालयंति श्रीवेंकटवासिन्स्वामिंस्त्वच्चर-
णप्राप्त्यै दासस्य मम हाहेति कुरु । ६ १० । ३ । हा
हंतेत्यनुक्त्वा लोकं बाधमानानामसुराणां जीवनकाल-
स्योपर्यग्निमुखबाणवर्षवर्षिचाप श्रीमहादेवीवल्लभ देवा-
सुरमुनिगणाद्रियमाण श्रीवेंकटस्वामिन्पुष्पपूर्णचरण-
योर्दुस्तरपापेन मया प्राप्तेरुपायं कल्पय । ६ । १० । ४
संश्लिष्टतया स्थितान्वृक्षान्सप्त तदा वृक्णवन्नेकधानु-
ष्काहो संश्लिष्टतया स्थितयोर्वृक्षयोरुभयोर्मध्ये गतव-
न्बीजभूताहो दार्ढ्यपूर्णमेघसदृशगजाश्रितश्रीवेंकटवा-
सिन्दार्ढ्यपूर्णशार्ङ्गस्य तव पादं प्राप्नुयां दासोहं कदा ।
६ । १० । ५ । को वा कालोऽस्माभिर्भूमिमाक्रांतवतो-
र्युगलीभूततामरसयोः साक्षात्कारस्येति सर्वं कालं
स्थित्वाऽनिमिषाः स्तुत्वा नम्रीभूय संघशः संघशः

कायरमनामनोभिर्दास्यं यत्र कुर्वंति तस्य श्रीवेंकटस्य
स्वामिन्सत्यमहं प्राप्य कदा त्वच्चरणयोरधो दासोऽहं
समाश्रयेयम् । ६ । १० । ६ । दासभूतेन मया समा-
श्रित्याऽनुभूयमानामृतानिमिषाणामधिपते ध्वजतया
हिंसकं पक्षिणं परिगृहीतवन्सुन्दरस्निग्धाधर स्वामिन्न्
पापव्याप्तानां कर्मणां निवृत्तये औषधभूत श्रीवेंकटवासि-
न्नस्मत्स्वामिंश्छोटिकापर्याप्तं कालमपि त्वत्पादौ द्रष्टुम-
नुष्ठानं विनाऽवस्थानं नोत्सहे । ६ । १० । ७ । अनु-
ष्ठानं विनावस्थानं नो सहे त्वत्पाददर्शनायेति सूक्ष्मज्ञा-
नवान्विषव्याप्तकंठः स्वामी पूर्णश्चतुर्मुख इंद्रश्च मत्स्य-
सदृशनयनाश्च परिवार्य यमाद्रियंते तस्य श्रीवेंकटस्य
स्वामिन्व्यामुग्धो व्यामोहयन्दासस्य मम समीप आगत
इवाऽऽगच्छ । ६ । १० । ८ । आगत इव नागच्छसि
नागच्छन्निवागच्छन्रक्ततामरसनयन रक्तस्निग्धाधर च-
तुर्भुजामृत मत्प्राणचिंतामणीनां कांतिभी रात्रिंदिवसं
कुर्वंति श्रीवेंकटे स्वामिन्हंत दासोहं त्वत्पादं विश्लेष्टुं
न शक्नोमि क्षणमपि । ६ । १० । ९ । विश्लेष्टुं न शक्नोमि
क्षणमपीति पुष्पवासिन्या वध्वा नित्याधिष्ठितवक्षस्का-
नुपमगुण लोकत्रयस्वामिन्मदीशानानुपमामरमुनिगणा-
द्रियमाण श्रीवेंकटवासिन् शरणांतरशून्यो दासोहं त्वच्च-
रणयोरधोन्तर्भूय प्राविशम् । ६ । १० । १० । चरण-



योरधोंतर्भूयाश्रित्य दासा वर्द्धंतामिति दयां ददतं प्रका-
रेण सदृशरहितं स्वामिनं केदारवत्कुरुकापुरीशठकोपेन
निनाशयिषुणा प्रणीते सहस्रे श्रीवेंकट एतद्दशकमा-
श्रितानाश्रिता वैलक्षण्यं प्राप्य स्थित्वा महत्याकाशे
तिष्ठेयुः । ६ । १० । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

आर्त्तेस्तथागततया मुनिरब्जवासा-
माश्रित्य संघटनकर्मणि जागरूकाम् ।
आवेद्य चाधिदशमं स्वमकिंचनत्वं
श्रीवेंकटेशचरणौ शरणं प्रपद्ये ॥ ६० ॥

आपत्संरक्षणादप्युपकरणतया मेचकाम्पादिभूम्ना
स्वानां विश्वासदानात्सुरगणभजनाद्दिव्यदेशोपसत्त्या
प्राप्याप्राप्यत्वयोगात्स्वजनविजनयोः सम्प्रपत्त्यप्रभावा-
दूचे नाथं शरण्यं श्रुतिशतविदितं वेंकटेशं शठारिः ॥ ६९ ॥

इत्थं सद्वारगम्यं स्वयमिति मसहस्थायिनां योजनार्हं
कर्णन्तं स्वैश्चारित्रैर्विघटितविजनं स्वान्वितस्तेयदीक्षम् ।
धृत्यादीनां निदानं घटकवशमहाभूतियुग्मं शठारि-
र्वैघट्यस्याप्यनर्हं प्रपदनसुलभं प्राह षष्ठे शरण्यम् ॥ ७० ॥

इति श्रीसहस्रगीतौ षष्ठशतकं समाप्तम् ।

---

# अथ सप्तमशतके प्रथममन्तस्तिष्ठद्भिर्दशकम् ।

अंतस्तिष्ठद्भिः पंचभिर्बाधयित्वा मां त्वत्पादपंकजस्य प्राप्तिमंतरेणैव बाधितुमितःपरमपि विचारयसि संख्याशून्यमहामायानिमिषैस्स्तूयमानलोकत्रयवन्स्वामिन्नमृत पितर्मदीशान ।७।१।१। मम नियामकैर्बलवद्राजैरद्वितीयैः पञ्चभिरेतैरुत्पादितैर्नक्तंदिवं बाधयित्वा तव मम प्राप्तभावप्रकारं कृत्वा गतवानसि शर्कराखंडामृतनीलमेघवर्ण समुद्रभूमिरक्षण द्युतिमन्नेमे पापिष्ठस्य मम वेदवेद्य ।७।१।२। बाधमानैः पंचभिः पापिष्ठं मां बाधयित्वा त्वच्चरणसाधनाभावप्रकारं त्वं प्रतिरुध्य किं लब्धवानसि हंतादिर्भूत्वा विस्तृतभूमिं सृष्ट्वा भुक्त्वोद्गीर्य क्रांत्वोद्धृतवन् ज्योतिर्मयदीर्घकिरीट जुष्टदासस्य मम मधुसूदन ।७।१।३। उचितमहं यथा न जानीयां तथा भ्रमयित्वाऽद्वितीयान्पंच प्रदर्श्य त्वच्चरणकुसुमस्य मया प्राप्यभावप्रकारं कृत्वा गतवानसि यावंति यावंतश्चाशेषयित्वा त्वदुदरेंतर्भाव्यैकस्मिन्वटदीर्घदले शयान बालक पापिनो मम पापपरिहारौषध ।७।१।४। परिहारौषधं विना पंचभिर्व्याधिभिर्हिंसति तैलयंत्रे प्रवेश्य बाधमानानि पंच पुरोभागपार्श्ववत्तया प्रवेश्य त्यजन्द्रिस्तुल्योसि कर्मौषधमितः परं भवेयुर्युध्यमानचक्रं धृत्वाऽसुराणां बलवत्कुलं मूलपार्श्वेन च्छिन्नवानस्याकाशस्थानां स्वामिन्भोः ।७।१।५। आकाशस्थानां स्वामिनो दास्यं कुर्वतामपि बाधकानि पंचेन्द्रियाण्येतानि भूमौ मां प्राप्तानि चेत्किं न कुर्युस्तदुपरि त्वमपि त्यजेश्चेत्स्वरवर्त्तिन्कविवर्त्तिन्भक्त्यंतर्वर्त्तिन्परमेश्वरागत्य मन्नेत्रवर्तिन्मनोवर्त्तिन्वाग्वर्त्तिन्नेकंवद ।७।१।६। एकमुत्कैकस्मिन्प्रकारे स्थितानद्वितीयान्पंच प्रबलखलान्कदाहं जेतुं शक्नुयां तव श्रीकृपा नास्ति चेत्तदा देवेष्वसुरेष्वाकर्षत्सु तरंगवति समुद्रे सर्पं वेष्टित्वैकं पर्वतं निहितवन्मत्स्वामिन्पापिष्ठेन मया पीयमानभोग्यामृत ।७।१।७। भोग्यामृततया भासमानानद्वितीयान्पंच यावतोपि मोहयितुं त्वया निहिताः प्राचीनमायाः सर्वास्सकलमूलैः सह च्छित्त्वा मां तव चिह्नं च श्रीमूर्तिं च विचिंत्य स्तुत्वा हस्ताभ्यां प्रणामं कुर्वाणं कर्तुं कृपां कुरु मयि मन्मातर्मत्कृष्णानिमिषाणां कुलमूल।७।१।८कुलमूलनाशकदुष्कर्मघोरप्रबलावटे पातयतां पंचानां बलमूलनाशकं वरमेव दत्त्वाऽनुगृहाण भूप्रभृतिशून्येषु सर्वलोकेषु स्थावरजंगमान्पदार्थान्नाना प्रथमं सृष्टवन्मत्कृष्ण मत्परंज्योतिः ।७।१।९। मत्परंज्योतिरिति त्वामाकुश्य त्वद्युगलीभूततामरसयो-

स्स्नेहेन द्रवीभूयावस्थानं तस्मिंस्तिष्ठत्परं दत्तवानसि प्रबलभारानारोप्य पंच दिशिदिश्याकृष्य बाधंते पूर्वं समुद्रं मथित्वामृतं गृहीतवन्मूर्त्ते । ७ । १ । १० । गृहीतमूर्त्तयोर्द्वितीयास्त्रयो भूत्वा गुणानां सृष्ट्वा रक्षित्वा संहरन्मत्पुण्डरीकनाभजलशायिनः पितुरेव दासदासदासेन शठकोपेन प्रणीते सहस्र एतद्दशकं दृष्ट्वा गातुं शक्तानां पापं निवर्त्तेत रात्रिदिवसम् ७ । १ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

आद्ये मुनिरस शतकस्य तु सप्तमस्य
तस्मिन्नपि प्रपदने विफले विषण्णः ।
ईशेन पातितमिव स्वमवेक्ष्य गर्त्ते
तस्मै स्वभीतिमवदद्विषयेन्द्रियेभ्यः ॥ ६१ ॥

निस्संख्याश्चर्ययोगादतिमधुरतयाथोजगत्कारणत्वा-
न्न्यग्रोधार्हत्वभूम्ना त्रिदशपतितया वाङ्मनःसंनिधानात् ।
पीयूषस्पर्शनाद्यैरखिलपतितया लोकसंरक्षणाद्यैः
शाठ्याशङ्कां सहेत त्रितनुरसुरहेत्याह विश्रान्तिकस्थः ॥ ७१ ॥

---

## द्वितीयं नक्तंदिवं दशकम् ।

नक्तंदिवं नेत्रयोर्निद्रां न जानाति नेत्रजलानि हस्ताभ्यां विकिरति शंखश्चक्राविति वदत्यंजलिं करोति तामरसनयन इत्युक्त्वार्ता भवति कथं धारिष्यामि त्वां



विनेति वदति महापृथ्वीं हस्तेन संस्पृशंत्यास्ते रक्तमत्स्यसंचारयुक्तनीरश्रीरंगवासिन्नस्या विषये किं कर्त्तुमिच्छसि । ७ । २ । १ । किं कर्त्तुमिच्छसि मत्तामरसनयनेति वदति नेत्रजलवृद्धिमत्यास्ते किं कुर्यां तरंगयज्जलश्रीरंगवासिन्निति वदत्युष्णं निश्वस्य निश्वस्य द्रवति पूर्वकृतपापाग्रेभवेति वदति मेघवर्णोचितं किमिदमिति वदति पूर्वं सृष्ट्वेमं लोकं भुक्त्वोद्गीर्य मितवानसि किं वा पर्यवस्यदस्याः । ७ । २ । २ । लज्जया शून्येपदपि मणिवर्णेति वदत्याकाशमेव पश्यति मुह्यति बलवतामसुराणां प्राणान्सर्वान्भुक्तवन्नद्वितीयेति वदत्यंतर्द्रवति नेत्रागोचर त्वां द्रष्टुमुपायमनुगृहाण काकुत्स्थ कृष्णेति वदति दृढध्वजप्राकारपरिवृतश्रीरंगवासिन्नस्या विषये किमकरोः । ७ । २ । ३ । न्यस्तपादा न्यस्तकरा तिष्ठति उत्थाय ःचारित्वा मुह्यत्यंजलिं बध्नाति कष्टं प्रेमेति मूर्च्छेति समुद्रवर्ण कठिनोसि भो इति वदति वर्त्तुलास्यनेमिदक्षिणकरेति वदति आगच्छेत्येवमुक्त्वा मुह्यति शिष्टपूर्णजलश्रीरंगवासिन्नस्या विषये किमचिंतयः । ७ । २ । ४ । चिंतयति मुह्यति प्रसीदत्यंजलिं करोति श्रीरंगे वर्त्तमानेति वदति वन्दते तदेव वर्षनेत्रजलपूर्णाऽऽगच्छेत्येवमुक्त्वा मुह्यति संध्याकाले हिरण्यदेहभेदिंस्तरंगितसमुद्रमाथिन्पूर्णामृत संधि

प्राप्य त्वच्चरणसमाश्रयणमेवाध्यवसितवतीं स्त्रियं मोहं प्रापितवन् ।७।२।५। मोहयित्वा मन्मनोपहृतवन्निति वदति महामायिन्निति वदति रक्ताधरमणे इति वदति शीतलजलपरिवृतश्रीरंगस्थितेति वदति उग्रासिगदाशंखचक्रचापधर दिविषन्मूलेति वदति वैशाल्यशाल्युरगशयनास्या विषये कृपां न करोषि पापिष्ठाया मम कर्मैव ।७।२।६। स्थानानुगुणं दुःखानि सुखानि सृष्टवन्नाश्रयशून्यानामाश्रयणार्थं स्थितवन्कालचक्रवन्समुद्रं स्थानं स्वीकृतवन्समुद्रवर्ण कृष्णेति वदति मत्स्यशालिशीतलजलपरिवृतश्रीरंगवासिन्निति वदति मत्तीर्थेति वदति सुंदरमहावर्षनेत्रजले प्रवहति तिष्ठति मम कोमलपल्लवः।७।२।७। पल्लव दिविषदामिति वदति पर्वतं धृत्वा गोसमूहं रक्षितवन्निति वदति रोदिति प्रणमति प्राणो यथाऽनलः स्यात्तथा दीर्घं निश्वसित्यंजनवर्णेति वदति उत्थायोपर्यवलोक्य निर्निमेषा तिष्ठति कथं वाऽवलोकयामीति वदति सुन्दरविस्तृतजलपरिवृतश्रीरंगवासिन्किं कुर्य्यां मम लक्ष्म्याः ।७।२।८। मच्छ्रीदेवीनित्याधिष्ठितवक्षस्केति वदति मम प्राणेति वदति तव श्रीमदंष्ट्रयोद्धृत्य त्वया गृहीताया भूदेव्या वल्लभेति वदति तदा व्यक्तं सत्प्राप्यालिंग्य त्वया गृहीताया गोपकन्यायाः प्रियेति वदति सुंद-



रश्रीरंगं मंदिरं स्वीकृतवन्नाध्यवसितुं शक्नुयामंतमस्याः ।७।२।९। अवसानमियं स्वस्या एकं न जानामीति वदति त्रिलोकीनायकेति वदति सुगन्धवासितारग्वधजटेति वदति चतुर्मुखदेवेति वदति विग्रहवद्दिविषन्निर्वाहकेति वदत्युदारश्रीरंगवासिन्निति वदति चरणावनाश्रितेवेयमुपगम्यावाप मेघवर्णचरणौ ।७।२।१०। मेघवर्णचरणावाश्रित्य कृपां शिरसा धृत्वोज्जीवितवता समृद्धजलताम्रपर्णीधौतवस्त्रवर्णपरिशुद्धजलपर्यंतप्रदेशेनोदारोद्यानपरिवृतोदारकुरुकापुरीशठकोपेन मेघवर्णचरणयोरुपरि प्रणीते वाङ्मालासहस्र एतद्दशकमभ्यसितुं शक्ता मेघवर्णाकाशेऽनिमिषपरिवृतास्तिष्ठेयुर्महानंदसागरे ।७।२।११।

श्रीदिव्यसुरिचरणावेव शरणम्।

आत्मप्रबन्धमसमाप्य हितं जनाना-
मात्मेष्टमक्षमतया हरिणा प्रदातुम्।
श्रीरंगिणाप्यसुशकप्रशमार्थचिन्तां
भूयस्तरामरतिमाप मुनिर्द्वितीये ॥ ६२ ॥

श्रीरंगे सन्निधानान्निखिलजगदनुस्रष्टृताद्यैः शुचित्वा-
द्विध्वस्तानिष्टभावादुरगशयनतः पुंस्सु कर्मानुरूपम्।
शर्माशर्मप्रदानाज्जलदतनुतयोपक्रियातत्परत्वा-
त्स्वामी स्वानां विगर्हामुपशमयति चेत्याह धीमाञ्छठारिः ७२॥

## तृतीयं धवलेन सुषिरवता दशकम् ।



धवलेन सुषिरवता शंखेन सह चक्रं धृत्वा तामरसनयनो मम मनस्यंतरेव पक्षिणं संचारयतीत्येतं प्रकारं न पश्यथ किमुक्त्वा वदामि मातरः प्रवहत्सुखस्य तस्य वैलक्षण्योपवेशस्थाने वेदघोषेणोत्सवघोषेण बालकसमूहानां क्रीडाघोषेण चाविनाभूते तिरुप्पेरैदिव्यदेशे गमिष्याम्यहमेव । ७ । ३ । १ । परिमलनीलकेशपाशाः ससख्यो मातरः पार्श्वग्रामवर्त्तिन्योहमिदमेकाकि मनो रक्षितुं न शक्नोमि मद्वशेनेदं नक्तंदिवं गत्वा मधुपपूर्णपुष्पोद्याने शीतलकेदारपरिवृते सुंदरतिरुप्पेरैदिव्यदेशे वैलक्षण्येनोपविष्टस्य व्योमस्वामिनो मणिवर्णस्य कृष्णस्य रक्तस्निग्धाधरस्य प्रकारस्थम् । ७ । ३ । २ । रक्तफलाधरप्रकाराधीनं रक्तप्रभदीर्घकिरीटस्याधः स्थितं सच्छंखेन सह चक्रं दृष्ट्वा प्रीतं तामरसनयनयोरधीनं निर्वृतं प्रतिमासं प्रतिदिनमुत्सवाविनाभूते सुंदरतिरुप्पेरै वैलक्षण्येनोपविष्टस्यास्मदुपकारकस्य मन्मनः सखिलज्जां धृतिं चात्यजत् । ७ । ३ । ३ । गतायै मत्कांत्यै गतानि मन्मनांसि च तत्रैव स्थितानि पतित्वेतःपरं कमवलंब्य किं संल्लपिष्यामि तरंगवत्समुद्रघोषवत्सर्वत्र विजृंभमाणसमीचीनवेदघोषः स्थित्वा



विवर्द्धते यत्र सुंदरतिरुप्पेरैस्थले वैलक्षण्येनोपविष्टस्य ध्वनच्छंखहस्तस्य मायायाममज्जं मातरो मयि किं कोपेन । ७ । ३ । ४ । कोपेन शकटं पादेन ताडितवतो मायिपिशाचीस्तनं पीतवतोऽर्जुनमध्ये गतवतः फलिते कपित्थे वत्सं क्षिप्तवतः कृष्णस्योपकारकस्य मम स्त्रीत्वं हारितवत्यस्मि कुपित्वेतः परं किं करिष्यथ मातरः पूर्वं स आगत्य वैलक्षण्येन यत्रोपविष्टस्तत्र फलवदुद्याने तिरुप्पेरैस्थले शीघ्रं मां प्रदर्शयत । ७ । ३ । ५ । शीघ्रं मां प्रदर्शयतानुरागः सागरादतिमहानीलमेघवर्णो मत्स्वामी तिष्ठत्यग्र आगत्य मद्धस्तलभ्यो न भवति भूम्यां स आगत्य वैलक्षण्येनोपविष्टो यत्र चतुर्वेदविद्भिर्यागैश्चाविनाभूते सुंदरनीवारचामरैर्वीज्यमाने संमिश्रजले तिरुप्पेरैस्थल एव शीघ्रं मां प्रदर्शयत । ७।३।६। महाप्राकापरिवृतां ससमुद्रेण दक्षिणलंकां संहृतवानुपकारक आगत्य वैलक्षण्येनोपविष्टो यत्र तिरुप्पेरैस्थल एव प्रविश्य मन्मनो विचित्य प्रत्यागच्छत्कुत्रापि द्रष्टुं न शक्नोमि केनेतः परमत्र युक्ता भवामः सखि मन्मनस आह्वानाय शक्तिमंतोपि न संति कमितःपरमवलंब्य किं साधनीयं मन्मनसा दृष्टमेवापश्यम् । ७ । ३ । ७ । दृष्टमेवावलंब्य सर्वे मिलित्वा नीलसागरवर्णेन सह मद्विषयेंगीकृत्यापवादमुद्घोषन् तदा प्रभृति परिगृहीते

मदभिनिवेशे कथ्यमाने सखि नृत्रिविडभूमिं सप्तसागरान्महांतमाकाशं चातिक्रम्य महानभस्वच्छतरंगपरिवृते तस्य वैलक्षण्येनोपवेशस्थाने सुंदरतिरुप्पेरैस्थले प्रविशामि गत्वैव । ७ । ३ । ८ । प्रविशामि गत्वा मम सख्यो मातरो ममाश्वासनं मा कुरुत युष्माभिरुच्यमानं किमस्या मनःपूर्त्तिश्च ममात्र नास्ति नीलवर्णो नीलसमुद्रभूमिं भुक्तवान्कृष्ण उपकारक आगत्य वैलक्षण्येनोपविष्टो यत्रानडुत्समृद्धिमत्सुंदरकेदारजलप्रदेशवति सुंदरतिरुप्पेरैस्थले महानगरे ।७।३।९। नगरेषु देशेष्वन्यत्र च गवेषयामि लज्जा मम नास्ति मत्सख्यः शिखरमणिदीर्घगृहदीर्घे सुंदरतिरुप्पेरैस्थले वैलक्ष्येनोपविष्टो मकरदीर्घपत्रकर्णो मायी शतस्य तदा विनाशाय तप्तवान्ननुपममेववर्णो नेमिवान्मन्मनोपहृत्यानेककालवान्स्थितः । ७ । ३ । १० । प्रतिकल्पं रूपाणि नामानि कृत्यानि च विभिन्नानि यस्य तं भूमिरक्षकं सागरजलवर्णमच्युतमाभरणकुरुकापुरीशठकोपेन प्रणीतेऽनुपमांतायेकसहस्रेंतर्गतेनैतेन तिरुप्पेरैस्थलविषयदशकेन सुदर्शनसुंदरहस्तं स्तोतुं शक्तास्ते दास्यविषये निमज्जेयुः । ७ । ३ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम्



श्रीरंगभर्त्तुरशरण्यशरण्यभाव-
प्रस्तावलब्धधृतिरस्य गतौ स भूयः ।
स्वस्मिन्हितप्रियपरेतरनिर्विशेष-
मासीदवार्यबहुलाभिरुचिस्तृतीये ॥ ६३ ॥

पद्माक्षत्वेनहस्तः परमखनिलयस्स्वोपकारी विगर्जच्छंखोनिष्टप्रहर्त्ता दरविलपनकृद्रक्षकोम्भोधिहस्यः ।
आपत्संरक्षकः श्रीमकरवरलसत्कुंडलस्स्वांगकांत्या
स्वेषु स्वं गोप्तृभावं प्रकटयति हरिश्चेत्यशंसच्छठारिः ॥ ७३ ॥

---

## चतुर्थं सुदर्शने वर्द्धमाने दशकम् ।

---

सुदर्शने वर्द्धमाने शंखचापयोर्वर्द्धमानयोर्दिक्षु मंगलाशासने वर्द्धमाने गदाखड्गयोर्वर्द्धमानयोरंडे छिद्रेण जलप्रवाहे वर्द्धमाने शिरःपादे वर्द्धमाने पितुः काले वर्द्धमाने लोकाक्रमणप्रकारः । ७ । ४ । १ । आपगानां पर्वतस्याभिमुखं धावंतीनां ध्वनिः सर्पशरीरं संवेष्ट्य पर्वतस्याकर्षणस्य ध्वनिः समुद्रस्य परिवृत्य भ्राम्यतो घोषतो ध्वनिः पित्रा सारार्थममृतस्वीकारदिने ।७।४।२। चलनरहिताः सप्त भूमयश्च स्थान एव पुनश्च चलनरहिताः सप्त पर्वताश्च स्थान एवापुनश्चलनरहिताः सप्त सागराश्च स्थान एव पित्रा सम्यक्प्रवेश्योद्धृत्य दृष्टार्थां कृतधारणदिवसे । ७ । ४ । ३ । कालविनाशाय भूजलयोर्नाशायाकाशस्य ग्रहाणां नाशायाग्नि-

वाय्वोर्नाशाय पर्वतानां समूलनाशाय तेजसां च नाशाय
पितुर्भक्षणशब्दे वर्द्धमाने लोकभक्षणप्रकारः।७।४।४।
आहारवतां मल्लानां भंगध्वनी राज्ञां पुरुषवत्सेनायाः
कंपध्वनिराकाशे गणनीयानां देवानां दृश्यमानानां
ध्वनिः पितुर्दर्शनीयभारते हस्तास्फालनसमये ।७।
४।५। दिवसे जीर्णे प्रथमसंध्यायामाकाशं दिशश्च
परितो व्याप्य वर्द्धमानं रक्तजलं यथा स्यात्तथा पर्वतं
विदार्य भिन्नवता सिंहेन सदृशेन पित्राऽगाधदुःखानि
कृत्वाऽसुराणां हिंसनप्रकारः ।७।४।६। अभिमुखे
संवीभूय शब्दायमानैः शरैरनेकशतशवेषु पर्वतवल्लुठत्सु
समुद्रो नदीष्वभिमुखं प्रविश्य रुधिरजलमयो यथा स्या-
त्तथा पित्रा भस्मसात्कर्तुं लंकायाः संहरणप्रकार एव।
७।४।७। आभिमुख्याद्दृष्टो ध्वजे मयूरवान्पुनश्चाभि-
मुख्याद्दृष्टो ज्वलदनलोपि पुनश्चाभिमुख्याद्दृष्टस्त्रिनेत्र-
मूर्तिः पश्यत पित्रा प्रधानो भ्रष्टो बाणो हृद्भुजानां
लवनदिने ।७।४।८। तदा भूमिजलाग्निवाय्वाका-
शपर्वतप्रभृतयस्तदा तेजसी द्वे अन्ये च पुनश्च तदा
मेघाः प्राणिनो देवा अन्ये च पित्रा तदाप्रभृति लोकानां
सृष्टिः ।७।४।९। चरंतीषु गोष्वधःस्थितासु पशुषु
वेष्टमानेषु निर्झरमुखे पूर्णेषु जलेषु सघोषं प्रवहत्सु
समूहीभूतगोसमूहानां व्रजस्य तत्रांतर्भावार्थं पिता घोर-
वर्षाद्रक्षित्वा पर्वतमुद्धृतवान्।७।४।१०। पर्वतमु-



द्धृतवत उपकारकस्य दासेष्वंतर्भूतस्य शठकोपस्य
वाग्वृत्तौ समीचीनसंदर्भे एकस्मिन्सहस्रे एतज्जयप्रदं दश-
कमादृत्याभ्यस्यताम् ।७।४।११।

श्रीदिव्यसूरिचरणावेव शरणम् ।

आतन्वता हितमयात्मदशानुरूप-
माविष्कृताननुपमान्पुरुषोत्तमेन ।
आत्मापदानविभवानतिलोभनीया-
नध्यक्षयञ्शठजिदन्वभवच्चतुर्थे ॥ ६४ ॥

विक्रान्त्या विष्टपानाममृतमथनतश्चोद्धतेर्भूतधात्र्याः
कल्पे लोकादनाच्च क्षितिभरहरणाद्दैत्यराजप्रहारात् ।
लंकासंकोचकत्वादसुरभुजवनच्छेदनाल्लोकसृष्टे-
र्धृत्या गोवर्द्धनाद्रेः स्फुटजगदवनप्रक्रियं श्रीशमाह ॥ ७४ ॥

---

## पंचममभ्यस्यंतो रामं दशकम् ।

अभ्यस्यंतो राममुपकारकं विना कंचिदभ्यस्येयुः
किं तृणपदार्थप्रभृतीनि सूक्ष्मपिपीलिकादीन्येकं विना
समीचीनस्थानायामयोध्यायां वर्द्धमानानि चराचराणि
सर्वाणि सत्स्वभावं प्रापितवंतं चतुर्मुखसृष्टे लोके ।७।
५।१। लोक उत्पन्ना नारायणं दासा विनाभवेयुः किं
लोके जनित्वाऽननुभाव्यमनुभूय मनुष्याणामर्थे लोकं
बाधमानान्राक्षसान्विचित्य संहृत्य लोकं रक्षित्वोमी-
ष्यागच्छदिति श्रुत्वापि ।७।५।२। शृण्वंतः केश-

यस्य कीर्त्तिं विना किंचिच्छृणुयुः किं शृण्वतां कर्णं दहं-
तीभिर्नीचनिंदोक्तिभिर्निंदामेव कुर्वन्नतिशयितस्वभावः
प्राचीनद्वेषो यस्य स शिशुपालः श्रीपतेश्चरणदेशं प्राप्त
इति स्वभावं जानतो ज्ञात्वापि ।७।५।३। स्वभावं जा-
नंतस्तं दासा विनाभवेयुः किं बहुविधविपुलपदार्थे-
ष्वेकस्याप्यभावेन शून्यदीर्घकाले सामीचीन्यवज्जलं
सृष्ट्वा चतुर्मुखं सृष्ट्वा स्वांतःप्राचीनतिरोभावकत्वे प्रकाश-
कत्वे सामर्थ्यानि विचिन्त्यापि ।७।५।४। विचिंत्यापि
पापेषु चिंत्यमानेषु मायिनश्चरणौ विनाऽऽश्रयेयुः किं
अगाधे महाजले मग्नां भूमिमधः पतनं यथा न स्यात्तथा
स्वस्मिन्नेकदंष्ट्राग्रे स्वयं दधद्वराहश्रीरूपवत्तया भवनं
श्रुत्वा विचार्य च ।७।५।५। श्रुत्वा विचारितवंतः केशवं
दासा विनाभवेयुः किं विच्छेदरहितौदार्यशालिहस्ते
महाबलौ बाधमाने बाधां प्राप्य संघीभूतानां देवाना-
मागत्य याचमानानां दुःखं निवर्त्तितवता नम्रीकृत-
सुंदरहस्तेन वामनरूपेण कृतानि नाटकानि दृष्ट्वापि ।
७ । ५ । ६ । दृष्ट्वापि विशदं ज्ञात्वाप्यभ्यासवंतः
कृष्णं दासा विनाभवेयुः किं भ्रमरभुज्यमानपुष्पमाल-
स्य मार्कण्डेयस्य जीवनकाले मालावज्जटाशिरसीशे
सह नीत्वा भासमाने प्राप्ते स्वीकृत्य तदा स्वसा-
म्यमापाद्य सह नयनं ज्ञात्वापि । ७ । ५ । ७ ।



गन्तुं ज्ञानवंतः श्रीमतो गुणान्विनाऽभ्यस्येयुः किम-
वधिशून्यमहातपसा बहुभिः क्रियमाणैरुपद्रवैर्दुःखं
देवानां कुर्वतो हिरण्यस्य शरीरे महाहरिरूपेण कृतां
मायां ज्ञात्वापि । ७ । ५ । ८ । मायां जानंतो मायिनं
दासा विनाभवेयुः किं दायमुद्दिश्य संबाधमानानामेक-
शतस्य नाशायैकपंचानामर्थे देशविदितमेकः सारथि-
र्भूत्वा गत्वा सेनां नाशयित्वा गतवतः समीचीन-
वार्त्तां ज्ञात्वापि । ७ । ५ । ९ । वार्त्तां जानंतो मायिनं
दासा विनाभवेयुः किमाच्छादयता जन्मना व्याधिना
जरया सह मरणमेतानि पातयित्वा महादुःखं समूल-
च्छेदं दूरीकृत्य स्वचरणयुगलस्याधो योजयित्वा तेन
क्रियमाणं क्षेमं विचिंत्य वैशद्यं प्राप्यापि । ७ । ५ ।
१० । वैशद्यं प्राप्य नाशं विना स्थितानामानंदगतिं
कुर्वंतं वैशद्यं प्राप्तं कृष्णं सुन्दरकुरुकापुरीशठकोपेन
प्रणीते वैशद्यवत्सहस्रे एतद्दशकमभ्यस्यंतस्ते वैशद्य-
वर्चितनाः पापप्रचुरायां त्रिलोक्याम् । ७ । ५ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

आत्मैकरक्षणपरानवतारहेतू-
नन्यादृशान्गुणगणानपहाय शौरिः ।
अन्यत्कथं मतिमतामवबोधनीय-
मित्यान्यपर्यमञ्जुनादधिपंचमं सः ॥ ६५ ॥

सङ्कीते मुक्तिदानात्स्थिरचरजनुषां सर्वशो रक्षकत्वा-
द्वेधे सायुज्यदानाज्जगदुदयकृतेरुद्धृतेर्भूमिदेव्याः ।
याच्ञार्थे वामनत्वाच्छ्रितभजकमुनेर्मोक्षदानाद्युदन्तैः
क्वेदं सर्वाश्रयं स्वं प्रकटयति हरिश्चेत्यथाज्ञापि तेन ॥ ७५ ॥

---

## षष्ठं पदार्थपूर्णादशकम् ।

पदार्थपूर्णांस्त्रींल्लोकान्सृष्टवन्पद्मनाभाहो पदार्थपूर्णांस्त्रींल्लोकान्मितवन्पद्मपादाहो तामरसनयनाहो एकाकिनो ममैकाकिनियामकाहो तामरसहस्ताहो त्वां कदा वा संगमिष्यामि । ७ । ६ । १ । कदा वा संगमिष्यामि हन्त हरचतुर्मुखस्तूयमानं रक्तं तव श्रीपादमहं भूर्नीरमग्निर्वायुराकाश आत्मैतत्प्रभृतीनि सर्वाणि भूत्वा स्थितमत्स्वामिन्पर्वतमुद्धृत्य गोसमूहं चारयित्वा तं रक्षितवन्मम नटाहो । ७ । ६ । २ । रक्षितवन्मम नटाहो पर्वतं धृत्वाश्मवर्षात्पुष्पवच्छीतलतुलसीककिरीट ग्रथितास्रग्वधसुन्दररक्तजट सुसंपन्न मच्चतुर्मुखागत्य मत्पूर्णप्राणभूतस्त्वं तर्हि स्तुत्यशक्यकीर्त्तिमंस्त्वां कथं संगमिष्यामि । ७ । ६ । ३ । कथं संगमिष्याम्यहमुज्ज्वलास्त्रयो लोकास्त्वमेव तत्रोच्छ्रायवांस्त्रिनयन उपकारको ब्रह्मा स्वामी च त्वम् उग्रतेजो वज्रहस्तेंद्रादिदेवास्त्वं समधुकुसुमशीतलसुंदरतुलसीकोत्तमांग मदीय-



गोपाल । ७ । ६ । ४ । मदीयगोपाल मदीयदुष्टनीलमाणिक्य त्वन्नाभौ विकस्वराँल्लोकांस्त्रीन्व्याप्य त्वज्ज्योतिःप्रवाहस्यांतस्त्वां दृष्ट्वा मदीयः पूर्णप्राणः कथं वाऽऽगत्य प्राप्स्यति । ७ । ६ । ५ । आगत्य प्राप्तुमुपाय न जानामि पूर्णनीलकांतौ वर्द्धमानायां रक्तकांतिज्योतिःपुष्पितमेकं माणिक्यं प्राप्तमिव मध्यस्योपरि पीतांबरेण सह चरणनाभिकरवक्षोनयनाधरे रक्तप्रभज्योतिः स्रावयति शयानं मच्छ्रीवक्षस्कम् । ७ । ६ । ६ । मच्छ्रीवक्षस्कं मच्छैलसुताविभागं सदा मम जिह्वांगनां मुखप्रदेशे धृतवंतं चतुर्मुखं स्थितशचीपतिं भूमिमुद्धृत्य प्राकारांस्त्रीन्दग्ध्वा जित्वेंद्रियाणि धावितवंतं व्योमेशानं न द्रक्ष्यामि किम् । ७ । ६ । ७ । वनमहिषं पश्यन्नश्व इव हरिं पश्यञ्जंबूक इव राक्षसाः क्रंदनं कृत्वा तदा लंकां विसृज्य बिलं प्रविस्यांतर्हिताः स्युर्यथा बलवत्पक्षिणं संचार्य बलवंतं मालिनं हत्वा पुनश्च पुरुषानुन्नतपर्वतान्कृत्वा संहृतवंतं द्रक्ष्यामः किम् । ७ । ६ । ८ । द्रक्ष्यामः किं चेतः कठिनक्रियायामेव प्रवर्तमानस्य पौरुषे बलवद्धरेर्भुजबलवतो राक्षसस्य कुलं संहृत्य पुनश्च तस्यानुजायैव विस्तृतजलां लंकां दत्त्वा रक्षित्वा स्वज्योतिषि प्रविष्टममरहर्यूपभम् । ७ । ६ । ९ । प्रवेशाशक्यं वैकुण्ठं दद्यादस्माकं गोपकुलेऽतिबाल एको

भूत्वा प्रविश्य माया एव कृत्वा अंतकस्वभावं कंसं हत्वा पंचानामर्थे क्रूरसेनां संहृत्य क्षमाधिको महति परं ज्योतिषि प्रविष्टः सिंहः । ७ । ६ । १० । प्रविश्य तद्धरिरूपेण हिरण्यशरीरं विदार्य प्रीतं चक्रवंतं श्रीमंतं कुरुकापुरीशठकोपेन प्रणीतेऽतिशयित एकस्मिन्सहस्र एतद्दशकमभ्यस्यतां संघीभूय मंगलमाशास्य चामरं वीजयेयुरबलाः । ७ । ६ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

तादृग्गुणप्रविशदानुभवप्रवृद्ध-
स्वापेक्षिताभिरुचितार्तिमहार्णवस्सन् ।
प्राप्यं शरण्यमपि वीक्ष्य कदानुगः स्या-
मंघ्र्योस्तवेति विललाप मुनिस्स षष्ठे ॥ ६६ ॥

नाभीपद्मोज्ज्वलत्वाद्द्विधिशिवभजनीयांघ्रिभावाद्भवाश्व
प्राणाद्यैस्सर्वभूतान्तरनियमनतस्संश्रिते भव्यभावात् ।
ब्रह्माद्यापद्विमोक्षादसुरनिरसनात्रातरक्षोनुजत्वा-
त्स्वीयाक्रन्दापहारी भवति च भगवानित्यवादीच्छठारिः॥७६॥

---

## सप्तममबलानां दशकम् ।

अबलानां प्राणादीनामुभौ मृत्यू किं न जानामि नेमिवत्सुंदरस्य कृष्णस्योपकारकस्य श्रीनयने किं न जानामि परितस्तामरसनवीनकुसुमे इवागत्य प्रकाशेते



पश्यत सख्यो मातरः किं कुर्यां दुःखिताहम् । ७ । ७ । १ । नर्तयित्वा घोषित्वापि स्थित्वा मातरो मम युष्माभिर्बाधनेन किं समीप उन्नताकल्पकस्य वल्ली किं पल्लवो वा न जानामि समूहितं नवनीतं भक्षितवतः श्रीनासिका मम प्राणस्यांतः उत्थापितबलवद्दीपप्रभासती तिष्ठति प्रबला । ७ । ७ । २ । प्रबलैकफलं किं पापिष्ठाया मम प्रबलपापं किं सौंदर्यसांद्रप्रवालकांतिमत्खण्डो वा न जाने नीलदीर्घमेघसदृशश्रीविग्रहवतः स्वामिनो बिंबाधरो दृश्यमानासु दिक्षु सर्वास्वागत्याविर्भाति मत्संरस प्राणायैव । ७ । ७ । ३ । सरसप्राणायैवाबलानामुपरि नम्रावुभौ नीलचापौ वा स्थिरगुणस्य मदनस्येक्षुचापो वा मदनस्योत्पादकस्य पितुः कृष्णस्य स्वामिनो भ्रुवौ ते एव मम प्राणस्योपर्यागच्छंत्यौ बाधेते सदा स्थित्वा । ७ । ७ । ४ । सदा स्थित्वैव प्रकाशमाना रक्तां प्रसारयंती प्रभां धवलविद्युत्किमथ वा मत्प्राणबाधकालंकारमौक्तिकानि वा न जाने पर्वतमुद्धृतवत उपकारकस्य स्मितं मम प्राणं बाधते एकमपि न जानामि मातरो ममोज्जीवनस्थलम् । ७ । ७ । ५ । उज्जीवनस्थलमबलानामसुराणां राक्षसानां च को वा प्रदेश इति स्फुरन्मकराकारांकुरितपल्लवः किं विस्तृतविषभोगिशयनस्य श्रीम-

त्कुंडलकर्णाविव करत्यागमेकमपि विना बाधेते पश्यत ।७।७।६।पश्यत मातर इति प्रदर्शनप्रकारं न जानामि नूतनवर्द्धमानशुभ्रचंद्रो वा स्नेहिनां विषयंत्रं वा दीर्घमांसलचतुर्विशालभुजस्य स्वामिनः श्रीलाटमेव ग्रहण आदरं कृत्वा प्राणं बाधते पापिष्ठाया मम प्राणसौंदर्यं नाशयित्वा । ७ । ७ । ७ । हरणोयुक्तं तामरसं लताप्रवालं चापस्यूताः सूत्रेण शीतलमुक्ताः पल्लवाः शीतलवर्द्धमानचंद्रमाः कांत्याभरणवर्द्धमानज्योतिर्मण्डलो वा कृष्णस्य कांत्याभरणसुन्दरमुखं भूत्वा पापिष्ठाया मम प्राणं गृह्णाति । ७ । ७ । ८ । गृहीतप्रबलांधकारं विशोध्योद्धृते दीप्तमंडलेंतः: प्रदेशाद्गृहीतो नीलसमीचीनतंतुसंघातो वा नैव मायिन केश एव विकस्वरपुष्पशीतलतुलसीपरिमले भासमाने आगत्य मम प्राणमपहरति तत्प्रकारं न जानीतः परं मातरोऽधिक्षिपथ । ७ । ७ । ९ । तिष्ठस्यंगण इति संपीडितहस्ताः सत्यो मां यूयं परितः परिक्रम्य दुरुक्तीर्वदताधिकप्रभमणिवर्णस्य सर्वत्र त्रिलोक्यां व्याप्तस्य प्रभावत्किरीटस्यैवौचित्यं स्वीकृतवन्मनोमातर आशा का युष्माकम् । ७ । ७ । १० । द्रष्टुमशक्यानां ब्रह्मा शिव इंद्र इत्येतेषामपि द्रष्टुमशक्यं कृष्णं कुरुकापुशठरिकोपेन प्रणीते सामर्थ्ययुक्ते सहस्र इदमप्येकं दश



कमभ्यस्यंतः सामर्थ्यवद्भिर्दिविषद्भिस्समानाः सर्वदा न नश्येयुः । ७ । ७ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

तत्प्रार्थितानधिगमेपि च भावनाया
भूम्नः पुरस्थितमिवाननमच्युतस्य ।
आलोकयन्नपि करेण न संस्पृशन्स
पीडामवाप महतीमथ सप्तमेन ॥ ६७ ॥

दृग्भ्यां पद्माकृतिभ्याममरतरुलतानासिकातोदरेण
भ्रूचापेन स्मितेनाप्यथ मकरलसत्कुंडलाभ्यां विशिष्टः ।
फालेनार्धेन्दुभासामलमुखशशिना नेत्रशोभादिभाजा
श्रीमान्देवः किरीटी स्मृतिविशदतनुर्भाति चेत्यभ्यधायि॥७७॥

---

## अष्टमं मायिन्वामन दशकम् ।

मायिन्वामन मधुसूदन त्वमनुगृहाणाग्निर्भूत्वा जलं भूत्वा भूमिर्भूत्वाऽऽकाशो भूत्वा वायुर्भूत्वा माता भूत्वा पिता भूत्वा तनया भूत्वान्यद्भूत्वा सर्वं भूत्वा त्वं भूत्वा तव तिष्ठतः प्रकारा एते के वा न्यायाः । ७ । ८ । १ । सुन्दरसमधुकुसुमशीतलतुलसीककिरीटाच्युतानुगृहाण चंद्रः सूर्यश्च भूत्वा सुन्दरनानाविधतेजो भूत्वांधकारो भूत्वाऽभिवृद्धवर्षुकबलाहको भूत्वा कीर्त्तिर्भूत्वापवादो भूत्वा पुनश्च त्वमुग्रनेत्रक्रूरांतकोपि जात इदं किं विचि-

त्रम् । ७ । ८ । २ । चित्ररथसंचारणसमर्थ श्रीचक्रवन्न नुगृहाण अनेकाद्वीतीययुगानि तानि भूत्वा तत्र वर्त्तमानास्तुल्या उज्ज्वला बहुपदार्था अवधिरहिता भूत्वा विभिन्ना भूत्वा विस्मयनीयेन तिष्ठसि त्वमेतानि कीदृशानि विषमाणि । ७ । ८ । ३ । समधुविकसत्तामरसनयन कृष्ण ममैकमनुगृहाण सदसच्च भूत्वाऽवधिशून्यं भूत्वा भिन्नं भूत्वा जलसमृद्धिमद्विशालसमुद्रे विषोरगशय्यायां शयित्वा मनसि बहुयोगं कृतवानस्येते क उपायाः ।७।८। ४।पाशान्निरस्य मां तुभ्यमेव सम्यक्स्वीकृत्य त्वं सुरभितपुष्पशीतलतुलसीशीर्ष मायिन्ननुगृहाण कायो जीवश्च भूत्वा नाशो भूत्वा जन्म च भूत्वा पुनश्च त्वं मायाः कृतवानस्येतानि कीदृशानि मोहनानि । ७ । ८ । ५ । मोहक वामन मत्युद्भवप्रकारमेकमनुगृहाण विस्मृतिभूत्वा वैशद्यं भूत्वोष्णं भूत्वा शीतं भूत्वा विस्मयो भूत्वाऽविस्मयनीयो भूत्वा विजयो भूत्वा कर्म भूत्वा फलं भूत्वा पुनश्च त्वं मोहको भूत्वा तव स्थितस्य प्रकारा एते कानि दुःखानि । ७ । ८ । ६ । दुःखावह कृष्ण प्रभावदीर्घकिरीटानुगृहाण दुःखावहमानो भूत्वा मदो भूत्वा प्रीतयो भूत्वा दुःखावहाः कामा भूत्वा तुला भूत्वा स्थितिर्भूत्वा गतिर्भूत्वा दुःखानि कृत्वा निहितवानस्येताः का लीलाः ।७। ८। ७। काभिर्लीलाभिः केन



स्थितवानसि मन्निर्वाहक कृष्णामुकस्वभाववानिति त्वं यावद्भिर्ज्ञातुमशक्योऽनादयस्त्रयो लोकाश्च भूत्वा तान्सृष्ट्वा पुनश्चांतर्भूत्वा बहिर्भूत्वा स्थितवन्नेते के वा व्यापाराः । ७ । ८ । ८ । कैः स्वाभावैः केन स्वभावेन स्थितवानसि मत्कृष्ण निबिडकरचरणप्रभृतीनि सर्वेन्द्रियाणि स्पृहणीयो रसः कांतिस्पर्शः शब्दो गंधः सर्वेपि त्वमेव त्वां ज्ञातुमुद्योगेऽवधिर्नास्ति सूक्ष्माणाम् । ७ । ८ । ९। न संति सूक्ष्माण्येतस्मादिति प्रकारेणानादिसमीचीनशास्त्रे उक्तं रूपवदरूपं च त्वमेव कुमुदवत्तुलसीमालालंकारवक्षोमदच्युत यथाशक्त्येकस्मिन्प्रकार उक्ते स एव तव भवत्प्रकारः । ७ । ८ । १० । भवत्स्वभावोयमिति ज्ञातुं शक्यं हरिं भवता स्वभावेन कुरुकापुरीशठकोपेन ज्ञात्वोक्ते उचितस्वभावसुंदरद्राविडानामेतस्मिन्सहस्र एतद्दशकं सत्स्वभावेन वदंतः पर्याप्ताः स्वेषां सर्वदा । ७ । ८ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

संगं निवर्त्य मम संसृतिमंडले मां
संस्थापयन्कथमसीत्यनुचोदितेन ।
आश्चर्यलोकतनुतामपि दर्शयित्वा
विस्मारितः किल शुचं हरिणाष्टमेन ॥ ६८ ॥

भूतैश्चन्द्रार्यमाद्यैस्सकलयुगगतैर्वस्तुभिश्चेतनाद्यैः
स्वैर्लोकानां नियत्या स्मरणतदितरोत्पादनान्माननाद्यैः ।
दुर्ज्ञेयत्वात्स्वभाजां बहुशुभकरणाद्भेदसंवेद्यभावा-
च्छ्रीमानाश्चर्यनानाविभव इति ततः श्रीधरः प्रत्यपादि ॥ ६९ ॥

---

## नवमं सर्वदा मामुज्जीव्य दशकम् ।

सर्वदा मामुज्जीव्य गच्छति दिवसे दिवसे मां स्वं कृत्वा मया स्वं भोग्यं द्राविडं गीतवंतमीशमादितया स्थितं मज्ज्योतिः किमुक्का धरिष्यामि । ७ । ९ । १ । किमुक्का धरिष्यामि मम समीचीनमात्मानमद्यैकं कृत्वा मम वाचा मयोक्तो भोग्यकविरिति वादयित्वा स्ववाचा स्वयं स्वं कीर्त्तयंतं मायिनं ममाग्रे वदंतं त्रिमूर्त्तिकारणम् ।७।९।२। भवेत्प्रथमोऽयमिति स्वस्मिन् विश्वाससमुत्पाद्य मम जिह्वायां प्रथममागत्य प्रविश्य समीचीनभोग्यं काव्यं परिशुद्धप्रथमभक्तानां स्वयं स्वमुक्तवंतं मम सुसंपन्नकारणं पितरं कदा विस्मरिष्यामि । ७ । ९ । ३। पितरं कदा विस्मरिष्याम्यहं भूत्वैवावद्यं विना स्वं काव्यं स्वयमुक्काऽनुपमदुष्कर्माणं मामुज्जीव्यार्जवमेव कृत्वा संचरतो गुणान्दृष्ट्वा ।७।९।४। गुणान्दृष्ट्वा शिक्षितं समीचीनभोग्यं काव्यमुचितं मम वक्तुं स्वभावस्याभावात्सौंदर्यशून्यं मां स्वं कृत्वा मया स्वं भूमौ स्तूयुस्तथा भोग्यं काव्यं गापयति परमः । ७ । ९ । ५ । भोग्यं काव्यं गातॄन्परमकवीन्स्वकाव्यं स्वयं स्वमगापयित्वाद्य सम्यगागत्य मत्सहायो भूत्वा मया स्वं प्रबलकाव्यं गापयति मम वैकुंठनाथ एव । ७ । ९ । ६ । वैकुण्ठनाथं मम प्रबल



कर्मनाशाय निश्शेषं यतमानं कुंदं स्वात्मानं मां कृत्वा मया स्वं वैकुण्ठत्वेन स्तोतुमुदारमधुरकाव्यं कृतवंतं कुंदं कस्मिन्काले चिंतयित्वा तृप्तो भवेयम् ।७।९।७। तृप्स्यामि किं चक्रसुन्दरहस्तस्य मदुपकारस्य गुणान्भूमिराकाशो जलं सर्वे मिलित्वापि वामश्चेदप्ययोग्यं मां स्वं कृत्वा मया स्वं गुणलाभाय मधुरकाव्यमुक्तवतः प्रकारस्य । ७ । ९ । ८ । चिकीर्षितस्यैव सामर्थ्यवतः श्रीवल्लभस्य गुणान्भूते भविष्यति काले भुञ्जानोपि तृप्स्यामि किं विस्मृतिशून्यं मां स्वं कृत्वा मया स्व सम्यग्बहुविधमधुरकाव्यान्युक्तवत उपकारकस्य । ७ । ९ । ९ । उपकारस्य प्रत्युपकारो मम प्राण इत्युक्तौ सम्यग्विचारे कृते सोऽन्यदपि तद्दशायां तदीयमेव मया स्वं मृदुमधुरकाव्यं गीतवतः पितुर्यः कश्चिदपि नास्ति कर्तुं योग्योत्र तत्र च । ७ । ९ । १० । अत्र तत्र च लक्ष्मीवल्लभं विनाऽसद्भावं दृष्ट्वा तादृशस्वभावेनोदारकुरुकापुरीशठकोपेनैवमुक्त एकस्मिन्सहस्र एतद्दशकं यथाकथंचिदुक्तमप्यानंदमुत्पादयेत् । ७ । ९ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

पृष्टः फलं स्ववसतेरिह दुश्शकायाः
स्वेन प्रबन्धरचनां फलमाह शौरिः ।
अन्येषु सत्स्वपि तदा स्वमपेक्षमाण-
मप्रत्युपक्रियममुं नवमे जगौ सः ॥ ६९ ॥

स्वामित्वाश्चर्यभावादपि च करुणया दत्तवाग्जृंभणत्वा-
दुर्जीवापादकत्वादघटितघटनाशक्तिवैकुंठयोगात् ।
शुद्धस्वांतत्वचक्रायुधजलधिसुतावल्लभत्वात्पिवृत्वा-
त्स्वे स्तोत्रे विष्णुरप्रत्युपकृतिविषये स्वान्युनक्तीत्यगायत्॥७९॥

---

## दशममानन्दोत्पादाय दशकम् ।

आनंदोत्पादाय सुंदरकुसुमांगनया सह स्वयं चैतत्सप्तलोक्या आनंदोत्पादनायानंदेन सह वैलक्षण्येनोपविश्य परिपालयतोऽस्मदुपकारकस्य स्नेहं प्राप्य सम्यङ्नित्यवासस्थानभूते सुंदरोद्यानपरिवृते तिरुवारन्विलैदेशे स्नेहं कृत्वा सम्यक्प्रदक्षिणं कृत्वा हस्ताभ्यां प्रणन्तुं दिवसा अपि सिद्ध्येयुः किम् । ७ । १० । १ । सिद्ध्येत्किं संदेहमेकं विना विस्तीर्णः प्रदेशः सर्वोपि द्वयोः पदयोरेव यथांतर्भवेत्तथा विवृद्धस्य श्रीवामनस्य पितुः सादरनित्यवासस्थानभूते महाकाशव्याप्तध्वजसौधे दीर्घप्राकारतिरुवारन्विलैदिव्यदेशे महापरिमलजलमादाय समर्प्य प्रदक्षिणं कृत्वा हस्ताभ्यां प्रणामः सिद्ध्येत्किम् । ७ । १० । २ सिद्ध्येत्किं सर्वदा गोविंदं



मधुसूदनं तेजस्विसिंहं नृत्यतः पक्षिण उपरि दृष्ट्वा हस्ताभ्यां प्रणम्य विहाय तस्य नित्यवासस्थानभूतं गायतो महागुणांश्चतुरो वेदान्यज्ञान्पञ्च षडंगानि निरूपितवतां वृद्धिस्थानभूतं महोद्यानं तिरुवारन्विलैदेशं प्रणन्तुं सिद्ध्येत्किं नित्यम् ।७।१०।३। सिद्ध्येत्किं नित्यं सर्वकाले मनसीह स्मरणलाभोऽभिवृद्धेक्षुमहानीवारकेदारपरिवृते तिरुवारन्विलैदेशे समृद्धमहागुणस्य त्रिलोकीशस्योत्तरमधुरायामुत्पन्नस्य सुंदरमणिवर्णस्य कृष्णस्योपकारकस्य विकसच्चरणकुसुमयोः ।७।१०।४। विकसच्चरणकुसुमयोर्मन्मनसि सर्वदा निवेश्य सेवार्थं बहूनां दासानामग्रे कृपां कृतवतो नागशयनस्य पितुः सादरनित्यवासस्थानस्य पुष्पशालिनो मणिमयदीर्घसौधदीर्घप्राकारस्य तिरुवारन्विलैदिव्यदेशस्य लोकप्रसिद्धगुणे गीयमानेऽस्माकमुपरि पापमेकमपि न तिष्ठेन्नश्येत् ।७।१०।५। एकमपि न तिष्ठेन्नश्येयुः सर्वाणि दुष्कर्माणि विचार्य्य प्रणमत भक्तास्तदा तत्र युद्धे जित्वा रुक्मिण्याः पूर्णायाः सुन्दरदीर्घभुजमालिंगितवतः प्रत्यहं सर्वदा मन्मनो यथा स्तौति तथांतस्तिष्ठत उपकारकस्य वासस्थानं सुन्दरतिरुवारन्विलैदिव्यदेशं महानगरं तत् ।७।१०।६। दीर्घनगरं तदेव पुष्पितोद्यानपरिवृततिरुवारन्विलैदीर्घनगरे नित्यं वसन्नुपकारको दीर्घव्यामोहः कृष्णो

दिविषदां नायको बाणपुरं प्रविश्य त्रिनयनस्योपकार-
कस्य भंगार्थं घोरयुद्धानि कृत्वा बाणस्य सहस्रं भुजा-
श्छिन्नवान्शरणमन्यथा किंचिद्भंतो न भवाम।७।१०।७।
विनागतिशून्योहं त्वच्चरणावेवेति विशालमहाह्रदे
स्थित्वा स्वस्य दीर्घचरणौ स्तुतवतो गजस्य मनोदुःखं
निवर्त्तितवत उपकारकस्यागत्य तत्र सुखेन नित्यवास-
स्थानभूतं सुंदरोद्यानवृतं तिरुवारन्विलैदिव्यदेशं प्राप्य
प्रदक्षिणे क्रियमाण उपागच्छेत्किं दुष्कृतं मनस्यपि न
संबध्नीयात् । ७ । १० । ८ । दुष्कर्मणां मनसि संबंधा-
भावे ज्ञानाकाशारोहणे प्राप्ते जिह्वया मनसा परिपूर्ण-
व्यापारेण चाभ्यस्य यावद्भिरागत्य सेव्यमानमुद्यानव-
त्तिरुवारन्विलैदिव्यदेशस्तं प्राप्य प्रदक्षिणं कृत्वा हस्ता-
भ्यां प्रणामः सिद्ध्येत्किमिति वदति मम चेतः।७।१०।९।
चेतोऽन्यस्यै कस्य प्रकारेऽप्रवृत्तस्य स्वभावं देवनायको
वेत्ति चिंतया क्रियमाणेषु तेनाविदिता मायाः का अपि
न सन्ति चिंतया वाचा व्यापारेण च भूदेवसमूहेन
वंद्यमाने चित्ताह्लादजनकतिरुवारन्विलैदिव्यदेशे नित्यं
वसते तीर्थायैव भवनानन्तरम् । ७ । १० । १० ।
तीर्थाय भवनानंतरमन्य एकः शरणं नास्तीति
विचिन्त्य तीर्थायैव निर्वृतमनसा सता सुंदरकुरुका-
पुरीशठकोपेनोक्ते तीर्थानां सहस्र एतद्दशकमभ्यस्यतो



देवाः सर्वकाले तीर्था एवेति पूजयित्वा प्रीत्या वदेयुः
स्वदेवीभ्यः । ७ । १० । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

आनन्दमाकलयितुं कमलासखस्य
संश्राव्य तत्करुणया स्वकृतं प्रबन्धम् ।
अर्हे तदादरणशालिनि दिव्यदेशे
यात्रामनोरथमसौ दशमे चकार ॥ ७० ॥

वैकुंठे नित्ययोगाच्छ्रितविवशतयानंतकीर्त्युज्ज्वलत्वा-
च्छेषे शायित्वरुक्मिण्यभिमतसुरजिद्बाणदोःखंडनाद्यैः ।
ग्राहग्रस्तेभरक्षाभिरुचितविषये सन्निधानाच्छुचित्वा-
त्स्तोतॄणां दुःखजातं विघटयति हरिस्तीर्थपादोभ्यधायि ॥८०॥
शाठ्याशंकासहिष्णुं प्रशमितजनतागर्हणं स्पष्टरक्षं
व्याकुर्वन्तं स्वरक्षाक्रममखिलजनस्नेहितां दर्शयन्तम् ।
स्वीयाक्रन्दच्छिदोत्कं स्मरणसुविशदं विस्मयार्हर्द्धिभूतिं
स्तोत्रे युंजंतमाह स्तुतिकृदघहरं सप्तमेऽनिष्टचोरम् ॥ ८१ ॥

इति श्रीसहस्रगीतौ सप्तमं शतकं समाप्तम् ।

---

## अथाष्टमशतके
## प्रथमं देव्यौ भवतः दशकम् ।

देव्यौ भवतः श्रीर्भूमिप्रेरिता अन्येऽमरा दास्यं
कुर्युराश्रिता लोकास्त्रयो नियम्य अभिमतमभिमतं
रूपं त्वद्रूपं पापिष्ठस्य मम बाधककमलनयनैकप्रवालाध-

रमणे प्राणामृत तरंगितसमुद्रमाथिन्पितर्दर्शनोपायमनु-
गृहाण । ८। १ । १ । दर्शनोपायमनुगृहाणेत्येव क्षुभितस्य
नयनजले प्रवहति पापिष्ठस्य ममाभिलषणीयप्रकारा-
न्सर्वानभिलष्य तव नामैव प्रलपितुमुपायमनुगृहीतवा-
न्मम हंत दर्शनोपायमनुगृहाण काकुत्स्थ कृष्ण भक्तस्य
मम कल्पक फलाशावताममृतं महाशीतलजलपरिवृतां
महापृथिवीं धृतवन्महापुरुष । ८ । १ । २ । उद्धृतवतो
महापुरुषस्य नंदगोपस्य समीचीनप्राणबालक यशो-
दायाः समीपवृत्तिमहानन्दकुलबालगज दासस्य मम
महास्वामिन्कण्डूतिमतो युद्धे हिरण्यस्य शरीरं द्विभा-
गतायै करनखानि नियमयन्नस्मत्समुद्रोचितैकरूपः
सन्नद्य त्वं नायासि कथं विश्वस्युस्त्वदीयाः । ८ । १ ।
३ । त्वदीयानां प्रीतिविषयीभूतमादरास्पदं रूपं तव
रूपं त्वयि प्रीयमाणानां तेषामादरास्पदानि समीची-
नानि कृत्यानि तव मायाज्ञान एकस्मिञ्शंके पापि-
ष्ठोहं युद्धं तत्कृत्वा विस्तृतायां भूमौ परितो व्याप्तां बाध-
कसेनां शमितवत्स्वामिन्नराणाममृतमसुराणां विषं पूर्ण-
प्राणाहो । ८ । १ । ४ । पूर्णप्राणाहो विस्तीर्णां
भूमिं सर्वां सृष्ट्वोद्धृत्य भुक्त्वोद्गीर्य मितवन्महाप्राणाहो
महाजलं सृष्ट्वा तत्र शयित्वा तं मथित्वा तत्र सेतुं
बद्ध्वा भग्नवन्शालवत्प्राणाहो मनुष्याणां देववद्देवानामपि



देवाहो एकप्राणाहो लोकानां सर्वेषां त्वामहं कथमागत्य
प्राप्स्यामि । ८ । १ । ५ । कथमागत्य प्राप्स्यामि ममे-
शितः सप्तलोकाश्च त्वमेव तत्र तेषां स्थापिता देवाश्च
त्वमेव तत्तत्कर्माणि च त्वमेव अधिकानि बहिःप्रदेशे
वस्तूनि संति चेत्तान्यप्येकस्त्वमित्येवमेव चेल्लयस्थान-
मरूपं सूक्ष्मं च त्वमेव महदिंद्रियमतिक्रांतं च त्वमेव ।
८ । १ । ६ । अतीतं त्वमेव भविष्यदपि त्वमेव वर्त्तमा-
नमप्येकस्त्वमित्येवमेव चेदधिकस्य तव स्वभावः सोयं
मध्यमश्चेति ज्ञान एकस्मिञ्शंके पापिष्ठोहं दुग्धक्षीर-
घृतघृतस्य भोग्यभूतरससमुद्रेऽमृतामृतजभोग्यरस तद्व-
सफलनीलाभुजमालिंगितवन्महागोप । ८ । १ । ७ ।
संश्लिष्टवन्महागोप मायया कार्त्स्न्येन प्रबलपापिष्ठं मां
बाधमानैर्गुणैरेव युक्तासुराणां क्रूरहस्तानां क्रूरमृत्यो
क्रूरपक्षिणमुत्थापितवन्फणासहस्रवद्विस्तीर्णनागशयन
क्षीरसमुद्रसंगत सेवनोपायं न जानामि मनोवाक्क्रिया
चाहमपि त्वमेव । ८ । १ । ८ । अहमपि त्वमेव भवा-
मीति सत्यमेव दुःसहनरकश्च त्वमेवं सत्याकाशेतिशयि-
तस्यानदस्य प्राप्तौ किमन्यन्नरकप्राप्तौ किमेवमपि अह-
मपि त्वमिति प्रतिविशदज्ञानं साम्यम्बिभेमि नरकस्य
मया प्राप्तेराकाशेतिशयितानंदं प्राप्य वैलक्षण्येनोपवि-
ष्टोस्यनुगृहाण तव चरणौ मम । ८ । १ । ९ । चरणौ
मह्यमेवातीवातीव परिपूर्णं दत्तवतो महोपकारस्य प्रत्युप-
कारतया भुजौ परिपूर्णमालिंग्य मम प्राणं सम्यग्व्य-

क्षीणां ज्योतिर्भुजसहस्रवन्शिरःसहस्रवन्सहशनयनस-
हस्रवन्पादसहस्रवन्नामसहस्रवन्नसहायस्य मम महापितः ।
८ । १ । १० । महापितरं ब्रह्मपितरं रुद्रपितरं मुनीना-
मंतरंगपितरममरपितरं लोकानामेकमद्वितीयपितरं
महाश्रीमत्कुरुकापुर्युदारशठकोपेनाभिलष्योक्ते सहस्र
उचितसूक्तिमालयैतद्दशकेनोज्जीवनं स्याद्भक्ता अस्मा-
कम् । ८ । १ । ११ । श्रीदिव्यसूरिचरणावेव शरणम् ।

आद्येऽष्टमस्य शतकस्य यथेष्टसिद्धि-
मप्राप्य खिन्नमतिराश्रितपारतन्त्र्यम् ।
सर्वेश्वरत्वमपि शांकितवान्शठारि-
रीशस्य तेन पुनरेव विबोधितश्च ॥ ७१ ॥

अथाद्यैः पत्न्यादिमत्वाद्रघुयदुकुलयोरुद्भवात्स्वाश्रितेच्छा-
धीनेहाविग्रहत्वात्सकलचिदचितामंतरात्मत्वभूम्ना ।
स्वामित्वात्स्वाश्रितावेध्यखिलगुणतया ज्ञानिनामप्यदुःख-
स्थानेच्छापादनाद्यैर्हरिरकथि परं दर्शनेच्छोः सुहृद्यः ॥ ८२ ॥

## द्वितीयमस्मद्रेखावद्वलयसख्यो दशकम् ।



अस्मद्रेखावद्वलयसख्यो हाऽस्मच्छत्रूणां पुरतो
लज्जित्वा युष्माकं मयैकां वक्तव्यां वार्त्तामवलोकयामि
कुत्रापि द्रष्टुं न शक्नोमि शंखा गलिताश्छायया विही-
नास्मि विशालस्तनौ विवर्णौ जातावार्त्ताऽमि म क्रूराक्षिप-
क्षिनेतारं मन्नायकं वेङ्कटनायकमाशास्य गत्वा । ८ ।
२ । १ । आशास्य गत्वैकं लभमानासु मदीयसखीनां



युष्माकमपीदानीमेतत्कथनप्रकारं हंत न पश्यामि दुःखि-
ताहं दर्शनयोग्यतामर सनयनं चोरं दिविपन्नायकमस्म-
त्स्वामिनं पश्यामि चेत्समृद्धीभूताञ्शंखान्पूर्त्तिं च जिघृ-
क्षुः कतिकालमार्त्ता भवामि । ८ । २ । २ । काले शिथि-
लीभवत्यपि पापिष्ठाहं न श्रांता भवामि पश्यत भूमौ
सुप्रसिद्धमपवादं प्राप्तास्मि समीचीनललाटा इतः परं
लज्जया किं नीलविकसद्दीर्घज्ज्योतिःपरिवृतदीर्घमेघव-
र्णेन कृष्णेनापहृतां सुंदरवलयेन सह कांतिजिघृक्षुरने-
ककालं संगत्यर्थं गत्वा । ८ । २ । ३ । संगत्यर्थं प्रति
गतास्मीतः परं किं दास्यामि सुंदरवलयमनःप्रभृतिकं
सर्वस्मिन्समीपं परित्यज्य गच्छत्यपहृतत्त्वयक्ता सर्वदा
बहुवलयानामग्रे प्रकारच्युतास्मि गृहध्वजप्राकारयुक्तद-
क्षिणकुडन्दैदिव्यदेशे सुन्दरपश्चिमभागे स्थितं मायानटं
नृत्यत्पक्षिणा धृतं जयशालियुद्धसुदर्शनदक्षिणमादृत्य ।
८ । २ । ४ । सुदर्शनदक्षिणस्यादरणं तदा तस्यास्मद्गृ-
हागमनं च सर्वं सख्योऽस्मद्विषये संजातं किमभिधानं
किमत्र दुष्करं प्रतिकालमेकतया सम्यग्जानतामपि
ज्ञातुमशक्यस्योपायवतस्तेजःशालिन आदेरनादिसुंदर-
ज्योतिषोनुसंधानकाले ८ । २ । ५ । आदिसुन्दरज्यो-
तिरनुसन्धानकाले मद्वाक्प्रतीतो न भवत्यऽनिमिषा-
णामप्यनवधिकसंशयान्कुर्यात्तथाविधप्रकारे तिष्ठति
मत्कांतिमपहृतवान्दलवद्धिकस्वरशीतलतुलसीमपि न

लतावत्सुंद-
दद्यात्केषां कुर्यामितःपरमाक्रोशं वदत
रकेदारपरिवृते कुडंदैदिव्यदेशे महाकुसुमनयनयोर्नि-
द्राणो व्यामुग्धः । ८ । २ । ६ । व्यामुग्धहरे केशव
नारायण श्रीमाधव गोविंद वैकुण्ठेत्येवमाक्रोशका-
रिणीं मां कृत्वोज्झित्य हित्वैकमपि रूपं चिह्नं च न प्रद-
र्शयेत्सुगंधिकुसुमकेशिन्यो मातरो मदीयसख्यः किं कुर्यां
कालेषु बहुषु व्यतीतेष्वपि पश्येयं शपे युष्माभिर्ममाव-
काशो नास्ति। ८ । २ । ७। अवकाशो नास्ति मया
वर्द्धिताः शुकाः शारिकाः पिका मयूराः मम कांति-
वलयानि मनश्चैकमप्यविहायापहतवतः प्राप्यो वैकुण्ठः
क्षीराब्धिरंजनाचलश्चैतेषु सन्निहितेषु वासनानिवृत्ति-
पाशनिवृत्तेरनंतरकालेन विना स तान्न प्रदर्शयेत् । ८ ।
२ । ८ । दर्शनं प्रयच्छेन्न केषामपि स्वस्य करकृतम-
तिक्रान्तमेकं मायया ब्रह्मचारिवामनं सुंदरं रूपं प्रदर्श्य
भूमिमाकाशं परिपूर्णं व्याप्तवतो दीर्घकांतिभुजेषु बहुषु
विवृद्धस्य देवोपकारकस्य मम पूर्त्यां सह लज्जामदा-
मितःपरं किं दास्यामि मदीयाः समीचीनललाटाः
पूर्णाः । ८ । २ । ९ । मदीयाः समीचीनललाटाः पूर्णा
अहमितः कुर्यां किं परं मन्मनो मां त्वदीयं न भवामीति
विसृज्य नेमिशंखौ द्वाभ्यां कराभ्यां दधतो बहुदीर्घच्छ्या-
मकांतिसूर्येण सह क्षीरेंदुं धृत्वैकसुंदरनीलसमीचीनदीर्घ-



पर्वतेनागच्छता सहशास्य कालविकसत्कुसुमपादं प्राप्नोत
। ८ । २ । १० । पादप्राप्तौ पाशेनाऽन्यप्रबलपाशा-
न्कात्स्न्येंन त्यक्त्वा दोषरहितगुणकृष्णस्य ,चरणयोरु-
दारकुरुकापुरीशठकोपेन प्रणीते दोषरहितैतादृवेक-
स्मिन्सहस्र एतदेकं दशकं स्वरेण सहाभ्यस्तवंतो याव-
देकेन दोषेण रहितास्तत्रात्र च सर्वत्र पूर्णा भवेयुः स्वय-
मेव । ८ । २ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

संप्रापकेपि च विभौ निजवांछितार्थ-
प्राप्तेर्विघात इतरेषु च पाशलेशः ।
स्वस्येति शंकितमनाः स्वहितेपि वर्गे
स्वस्मिन्नपि प्रवणतां मुमुचे द्वितीये ॥ ७२ ॥

तार्क्ष्योद्वहनत्वाच्छुभनयनतया नीलमेघाकृतित्वा-
दाश्चर्यैश्चेष्टितत्वाद्धुरवधरतया योगिभिर्निर्जरैश्च ।
स्वेषु व्यामुग्धभावात्प्रतिहतिविरहाद्दुर्जनादृश्यभावा-
न्निस्सङ्गानां जनानां सुलभतम इति प्राह नाथश्शठारिः ॥८३ ॥

---

## तृतीयं तत्राऽत्र च दशकम् ।

तत्राऽत्र च दिविषदो दानवाश्च यावन्तस्सर्वेप्येता-
दृश इति त्वां ज्ञातुमशक्ता आक्रुश्य अंगाश्रिता पुष्पां-
गना भूम्यंगना गोप्यंगना च शंखचक्रकर इति वदंति

शरणम् ।८।३।१। शरणभूतेषु चतुर्वेदशास्त्रेष्वप्रविश्य मरणं जन्म महाव्याधिर्जरेत्युक्तान्येतानि न्यवर्त्तयाम करणवन्नानासैन्यानि निश्शेषं यथा धावेयुस्तथा ज्वलत्सुदर्शनं रक्षकं दृढायुधं धर्तुरीशस्य दासा भूत्वैव ।८।३।२। दासान्न नियमयति सुदर्शनं शंखं च वहति स्वयमसिं चापं चादायाऽनुगच्छंतोऽन्ये न संति चरणौ भुजौ च हस्ताभ्यां परिपूर्णं प्रणंतुं न पश्यामि प्रतिदिनमन्विष्यामि दासोहं भूम्याम् ।८।३।३। भूमिमन्नं भुक्त्वैकापकरूपस्सन्वटस्य नाम्ना पत्रेऽन्नं वशं कुर्वन्स्वामिन्कालो गच्छन्नेकनीलांधकारकल्पसदृशो भवति तव सुंदरजलदविग्रहदर्शनमाशास्य मज्जतः पापिष्ठस्य मम ।८।३।४। ध्वजपूर्णहर्म्यंकोलूरुस्थले पुलिंगुडिस्थले परिवर्त्तनं विनैवमेव त्वं निद्रां प्राप्य नंदसीतीदं दासानां दुःखं निवर्त्तितवतः श्रमो वान्यथैतद्भूमिं दीर्घीभूयाक्रांतवतः श्रमो वा वद ।८।३।५। असेवमानानाममराणां सेवागुणश्च स्वयमेव सन् सौंदर्यपूर्णसुदर्शनशंखौ च स्वयमेव धरन्स एव किलाशाम्यत्क्रूरव्याधीँल्लोके निवर्त्तयितुकामः श्रीमता नीलमणिसदृशविग्रहेण मन्मनो भ्रामयितुमागतः ।८।३।६। आगच्छन्तो गच्छन्तो वण्परिसारे स्थितस्य मत्तिरुवाल्मार्वसंज्ञस्य मत्प्रकारं न वदति कर्त्तव्यं किं रूपव्याप्तचक्र-



शंखौ धृत्वात्र भवता सहैकपार्श्वे संचारेच्छुरेको दासोऽस्तीत्येव ।८।३।७। कदा वा मां त्वत्सौंदर्यपूर्णालंकारशोभितचरणयोरधः स्थित्वैव दास्यकरणाय त्वं स्वीकर्तुमिच्छसि पर्वतैः सप्तभिर्भूमिभिः सप्तभिः परिवृत्तसमुद्रभूमिं कृत्स्नां सप्तस्थित्वैवाक्रांतवद्दीर्घचरणसुदर्शनवल्लक्ष्मीव्यामोहशालिन् ।८।३।८। श्रीमन् चतुर्मुखो रक्तजट इत्येते स्वामिनः स्वाभावं के वा ज्ञातुं शक्नुवतीत्युक्त्या किमेकमहाकारणकालस्वामिन् मयादासवञ्श्यामलमहाविग्रहेति वदामि मत्प्रेमक्षुभितस्सन् ।८।३।९। मोहशून्यसमीचीनतपस्विनो मुनयः पारदृश्वानः कंपशून्या दिविपदः सर्वे सेवंते सक्षोभं महासमुद्रं मथितवतः सुस्पष्टमस्माभिस्तवनं कीदृशं कृत्यं वदत ।८।३।१०। अवाच्यक्रूरव्याधिनिवृत्तये कृपां कुर्वंतं दीर्घकिरीटं पर्वतसदृशगृहस्थिरकुरुकापुरीशठकोपस्योक्तिसहितशब्दसंदर्भैकसहस्र एतद्दशकं क्रमेणाभ्यस्तवंतो दीर्घलोके जायेरन् ।८।३।११।

श्रीदिव्यसूरिचरणावेव शरणम् ।

प्रेमाधिकेन विवशस्सुकुमारमूर्तेः
क्षेमाय खिन्नहृदयः पुरुषोत्तमस्य ।
तद्दर्शितात्मपरनित्यमुमुक्षुमुक्तैः
किंचित्समाहितमनाः शठजित्तृतीये ॥ ७३ ॥

श्रीभूम्योर्नायकत्वादरिसुकरतया कल्पसिंधौ शिशुत्वा-
च्छीस्थाने सन्निधानात्सुरहितकरणाच्छ्रीनिवासत्वयोगात् ।
विक्रान्त्या विष्टपानां विधिदुरधिगमात्स्वेषु सौलभ्यभूम्ना
चैकाकी स्वाश्रितानां विहरणसमये श्रीधरः प्रत्यपादि ॥ ८४॥

## चतुर्थं प्रवहन्मदजलदशकम् ।

प्रवहन्मदजलनिर्झरगजमहागिरिदंतयुगलीभूतशिखरे भङ्क्त्वा पातयित्वा गजसंचारयितृदृढहस्तिपकप्राणं हत्वा रंगे मल्लान् हत्वा परितो मंचेषु स्थिता युद्धोन्मुखराजानो यथापश्चाद्भागं दर्शयित्वा गच्छेयुस्तथा हर्म्योपरि कंसं प्रहतवतः श्रीमतो बालगोस्य तिरुच्चंगन्नूरुदिव्यदेशे तिरुच्चित्तारु अस्माकं प्रवेशस्थानम् । ८ । ४ । १ । अस्माकं प्रवेशस्थलमस्माकममृतमनिमिषाणां पितरं मत्पितरं विस्तृतांस्त्रीन् लोकान् सृष्ट्वा रक्षित्वा संहरंतमनुरूपत्रिमूर्त्तिमस्मदात्मानं रक्तमत्स्यसंचारयुक्तमधुजलस्थलपरिवृतसमीपे तिरुच्चंगन्नूरिति रुचितारुप्रदेशे तत्र सन्निहितमादिं विना को वाऽन्यो ममानुकूलसहायः । ८ । ४ । २ । मदनुकूलस्वामिनोऽनिमिषाणां स्वामिनो महापृथिवीमुद्धृतवतो मत्स्वामिनः प्राचीनप्रबलपापानां सर्वेषां नाशाय मां नियमयतो मत्स्वामिनो दक्षिणदिगलंकारे तिरुच्चंगन्नूरितिरुच्चित्तारुतीरे पश्चिमभागे स्थितस्य मत्स्वामिन-



श्चरणौ विहाय शरणं चिंतायामप्यन्यन्नास्ति मम । ८ । ४ । ३ । अन्यन्नास्ति मम महत्यां त्रिलोक्यां परिपूर्णमहारूपो भूत्वा विवृद्धस्य वामनवर्णिनो मम स्वामिनः शब्दायमानसमुद्रं मथितवतः सुन्दरमाणिक्यस्य मम स्वामिनो निबिडफलकदलीक्रमुकनारिकेलपंक्तिपरिवृते तिरुच्चंगुन्नूरि तिरुच्चित्तारुविदिततया याथार्थ्येन स्थितस्यास्मत्स्वामिनश्चरणयुगलं विनैकंशर णम् । ८ । ४ । ४ । अन्य एको रक्षकोपि तस्मात्पृथङ्न तत्त्वं तथापि तं विना मत्प्राणो मिलित्वा नालिंगति तस्मात्तस्य नित्यवासस्थाने समीचीनचतुर्वेदिभिर्यागेषूत्पादितैः सुगंधिधूमैराकाशप्रकाशमाच्छादयति समीचीनदीर्घगृहे तिरुच्चंगुन्नूरि तिरुच्चित्तारु मम समीचीनो रक्षकः । ८ । ४ । ५ । मम समीचीनरक्षकं मत्पूर्णप्राणमनिमिषाणां पितरं मातरं तं स्वेनापि स्वस्वभावो ज्ञातुमशक्यं विशालसमुद्रशयनं स्वामिनं मनोग्राह्यगुणानां त्रिसहस्राणां प्रधानैः शिवाजाभ्यां स्वे च तुल्यानां वृद्धिस्थाने धनत्वशालिदृढगृहे तिरुच्चंगुन्नूरि तिरुच्चित्तारुप्रदेशेऽपश्यम् । ८ । ४ । ६ । तिरुच्चंगुन्नूरि तिरुच्चितारुप्रदेशे दृष्टः स स्वामी सदा श्रीरक्तकमलनयनयो रक्ताधरे रक्तपादयो रक्तहस्तयोः श्रीरक्तकमलनाभौ रक्तकमलोरसि समीचीनपीतांबरे श्रीरक्त-

किरीटे हारे आयुधेषु स्फुरत्सु मम चित्ते वर्त्तते । ८।४।७। उज्ज्वलतया मन्मनस्यंतः स्थितं महात्मभिर्भूसुरैश्चतुर्वेदविद्भिर्दिक्ष्वञ्जलिं बद्ध्वा स्तूयमाने तिरुचंगुन्नूरि तिरुचित्तारुतीरवासिनं तेजःशालिदिविषदां शरणस्थानमसुराणां प्रबलहस्तानां कृतान्तकं स्तोतुमुपायं न जानामि स्वाश्रितत्रिलोक्याः सृष्ट्या सह स्थितिसंहारकारिन् ।८।४।८। सृष्ट्या सह संहारं रक्षणं च कुर्वाणो ब्रह्मा परात्परः शिव उपकारकश्च स एव मध्ये प्रविष्ट एकं रूपमपि तद्भिन्नाभूतं न स एव स्तुतिर्न भवति यावदपि स एव दानजमहाकीर्तीनामनेकेषां स्वात्मभूतानां सूक्ष्मेच्छासो हतक्रियानित्यप्रवृत्तवलीस्वभावानां तिरुचंगुन्नूरि तिरुचित्तारुप्रदेशे नित्यसन्निहितो नाथ एव ।८।४।९। अनुरूपनाथं ते ते भूत्वा तेषां कृपानुगृह्णंतं स्वामिनमनुरूपगुणानां त्रिसहस्राणां वेदविदां स्थाने भूदेवानां वृद्धिस्थाने सन्निहितशीतलकेदारे तिरुचंगुन्नूरि तिरुचित्तारुतीरवासिनं सुप्रतिष्ठमायिनं त्रिनयनस्वामिन चतुर्मुखमाश्रितोस्मि ।८।४।१०। मधुसमीचीनं क्षीरमिक्षुरसममृतं तृप्ताँल्लोकान् भक्षितवंतं स्वामिनमाकाशस्थं चतुर्मुखं विकसितशीतलनाभिकुसुमे सृष्टवंतं मायिनं नायकमुदारकुरुकापुर्युदारशठकोपेनोक्ते सहस्र एतद-



शकमाकाशस्योपर्यारोप्य कृपां कृत्वा नाशयेज्जन्ममहामायानाटकम् ।८।४।११॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

क्षेमं स्वशौर्यमधिकं विमतैरधृष्यं
ग्रामं च कंचन निजावसथायमानम् ।
तत्र द्विजानरिजितस्वसमान्प्रदर्श्य
निर्भीरिकारि नितरां स मुनिश्चतुर्थे ॥ ७४॥

दुर्दान्तेभेन्द्रभङ्गाच्छुभनिलयतया साम्यतश्चेतरेषां
स्वायतत्वेन भावाच्छ्रितहृदि सततं देवतद्द्वेषिसंघे ।
मित्रामित्रत्वयोगाज्जगदुदयकृतेर्दैवतात्मत्वमुख्यैः
श्रीमान्वैकुण्ठनाथः श्रितविहितसमग्रत्वभूमान्वभावि ॥ ८५॥

---

## पञ्चमं मायानटवामनदशकम् ।

मायानट वामन पापिष्ठस्य मम कृष्ण नयनशयपादेन परिशुद्धरक्तकुसुमभूतेन ज्योतीरक्ताधरेण मुकुलेनच्छायावच्छ्यामलश्रीविग्रहेण शीतलहरितपत्रेण तामरसदीर्घपरिमलवत्तटाकवदागच्छन्नेकस्मिन्दिने द्रष्टुमागच्छ ।८।५।१। द्रष्टुमागच्छेत्येवं नयनयोरश्रुरे च शुष्को दासोहं लज्जित्वा समीचीनदेशे व्याकुलीभवामि चेत्कृपां कृत्वैकस्मिन्दिने त्वं हंत द्रष्टुं नागच्छसि नीलसूर्योदयवन्नीलमहामाणिक्यनूतनसमीचीनपर्वत इव

कातिज्योतिःकिरीटजुष्टोत्तमांग स्वामिन् । ८ । ५ । २। किरीटजुष्टोत्तमाङ्गस्वामिन् त्वन्निविडस्पृहणीयधामशीतलतुलसीपरिमलवन्मालास्वामिन् इत्येवं रुद्धकंठो रोदिमि चेत्प्रकारलभ्रमकरकुंडलाभ्यां प्रवालाधरेण चतुर्भुजैर्डमरुसदृशमध्येन च युक्त एकस्वच्छजलमेघ इव प्रादुर्भव । ८ । ५ । ३ । स्वच्छजलमेघवद्रासमानस्त्वत्तेजःशालिग्रह फलाधरो मधुनीरकमलनयने चागत्य मन्मनसि परिपूर्णतया स्थितानि महाजलरजतपर्वतस्योपर्युदारवर्षन्नीलमेघवत्परिशुद्ध जलसमुद्रे शयान मत्स्वामिन वक्तुं न शक्नोमि । ८ । ५ । ४ । वक्तुं न शक्नोमि दासोहं त्वदुज्ज्वलतेजः श्रीपादौ निस्सीमश्रियौ बालसूर्य्यौ द्वाविव मम मनसि तिष्ठतो दुःखमित्युक्तस्य तमसः प्राप्तेरुपायः कः सागरावृतमहापृथिवीं कृत्स्नां भुक्तवन्महाजलमेघवर्ण । ८ । ५ । ५ । मेघवर्ण कुंभनर्तक पापिष्ठस्य मम नेत्रे कृष्णं दंडनायकेति ममेशनायाकुश्याह्वयामि चेद्व्योमतले वा भूमौ वा विस्तृतजलसमुद्रे वाऽन्यत्र वा दासभूतस्य मम तव चरणदर्शनायैकस्मिन्दिन आगत्य प्रादुर्भव । ८ । ५ । ६ । आगत्य प्रादुर्भव नोचेत्तव लोकविक्रांतकुसुमचरणयोरधः प्रथममागत्याहं यथा तिष्ठेयं तथाम आह्वय दास्यं स्वीकुरु रक्तशीतलकमलनयनशयचरणेन रक्ताधरेणैकेन नीलसूर्येणान्तःशून्यकिरणविस्तारिणा विकसता सदृश स्वामिन् । ८ । ५ । ७ ।



सदृशस्वामिनो रूपेणेति मनसि शिथिलः प्रतिदिनं निबिडानां मेघानां बहुषु संघेषु दृश्यमानेषु बाध्येहमनुरूपाणां पंचानामर्थे तदा द्विपंचाशतां मूलनाशाय प्रविष्टसमीचीनरथाद्वितीयसारथे आगच्छायमेव किं पक्षपातः । ८ । ५ । ८ । अयमेव किं पक्षपातो द्योतमानचक्रायुधाऽऽरोहणार्हमहापक्षपक्षिणं तमेव ध्वजतयोद्धृतवन्नित्येवंकंठो रोदिमि चेत्कथं वा विचारयेदेतन्महापृथिवीभारं निवर्त्तयितुं मधुस्यन्द्युद्यानोत्तरमथुरायांजातो मायिन् । ८ । ५ । ९ । उत्पन्नमायिन् भारतयुद्धकृन्मायिन् त्वय्येवं रुद्धसति अतिशयितवाय्वग्निजलाकाशभूमितदितरभूत स्वामिन् दुग्धक्षीरस्थघृतवदेतेषु सर्वेषु द्रष्टुमशक्यतया स्थितमहामायिंस्त्वां कुत्र द्रक्ष्यामि । ८ । ५ । १० । कुत्र द्रक्ष्यामि भोग्यतुलसीकं स्वामिनमहमित्येवं तत्र प्रवणैर्वचोभिः सुंदरशीतलकुरुकापुरीशठकोपेनार्जवेनोक्ते सहस्र एतदपि दशकमभ्यस्यंतोत्रैव दृष्ट्वाऽत्रैव जन्मनि मुदिता भवेयुर्नक्तं दिवम् । ८ । ५ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

सुक्षेमसुन्दरतनुं परिलिप्सुराशां
शोचन्मुनिर्दहनलीढ इवातितप्तः ।

एवमित्युपगतस्य बहुप्रकारा-
नाख्याय शौरिरधिपंचममाजुहाव ॥ ७५ ॥
आश्चर्यंहान्वितत्वाच्छुभमुकुटतया स्वामिताब्धौ शयत्वा-
ज्जीमूतश्यामलत्वाच्छ्रितसुलभतया पद्मसूर्योपमांगात् ।
सारथ्यात्पाण्डुसूनोरवनिभरहृतेरन्तरात्मत्वयोगा-
जीवापेक्षा प्रतीक्षो भवति तदवने श्रीपतिश्चेत्यभाणि ॥ ८६ ॥

## षष्ठं नक्तंदिवं दशकम् ।



नक्तंदिवं स्वं स्मृत्वा वर्द्धितुं समीचीनकृपामस्म-भ्यमेव दत्त्वा कृपां कुर्वतो दलसुंदरशीतलतुलसीकशिरसः पितुर्ग्रामः संपत्समृद्धाभिवृद्धिस्थानं तिरुक्कडित्तानमेव ।८।६।१। तिरुक्कडित्ताने च मम चित्ते च सदैव व्याप्रत्यांतःप्रतिष्ठित उपकारकः पश्यत गर्व प्राप्य तदा भ्रांतानां राक्षसानां शरीरनाशाय शरवर्षकृदेक एव ! ८ ।६।२ । एको द्वावद्वितीयास्त्रयो वेति स्थितो रूपेण सूक्ष्मः प्रतिचिंतनं मधुरीभवति लक्ष्म्यधिष्ठितवक्षास्तिरुक्कडित्ताने आदरेण नित्यं वसन्माय्युपकारकः ।८।६।३। माय्युपकारको मम बलवत्पापानां नाशनिवृत्तये स्नेहेन चित्तं जनपदं वासस्थानं स्वीकृतवानुरगशयनीयप्रकारेण तेजस्व्यमरतिरुक्कडित्तानं परि-



मलवदुद्यानयुक्तमंदिरत्वेन स्वीकृतवान् । ८।६।४। मंदिरत्वेन स्वीकृतवान्स्वतिरुक्कडित्तानं मंदिरत्वेन स्वीकृतवांस्तेन सह मन्मनोमंदिरशालिषु देवेषु सर्वेषु प्रणमत्सु वैकुंठं मंदिरत्वेन स्वीकृतवान् कुंभनर्त्तकः स्वामी ।८।६।५। नर्त्तकस्वामिनः पापिष्ठस्य मम दुःखं सर्वं नाशितवतः स्वामिनो मधुसूदनस्य स्वामिनो नित्यवासस्थानभूते पुष्पितोद्यानशीतलतिरुक्कडित्ताने स्तुते न तिष्ठेत्स्वीकुरुत दुःखम् । ८ ।६ ।६ । स्वीकुरुत दुःखनिवृत्तये मनसि गोविंदस्य भूमिमाकाशं सर्वं मितवत्कांतिमत्तामरसस्य भूमिष्ठानां स्वयं प्रणामाय दिविषद्भिस्स्वयमागत्याद्रियमाणं तिरुक्कडित्ताननगरमेव ।८।६।७ स्थाननगराणि श्लाघ्यानि सर्वत्राकाश इयं भूमिः सागरः सर्वाण्यपि मान्मायिन एव तथापि मन्मनः तिरुक्कडित्तानं नगरं च स्वदायस्थानम् ।८।६।८। दायस्थानेषु श्लाघ्येषु सर्वत्र मायया ऽऽदृत्य वैलक्षण्येनासीनो नित्यं वसति तेजस्व्यमरतिरुक्कडित्ताने गोपपरिवृढोऽद्भुत एव ।८।६।९ । अद्भुतो नारायणो हरिर्वामनस्तिष्ठत्यादृत्यासीदति मन्मनस्येव समीचीनकीर्त्तिवेदिनां चतुर्वेदस्थिरघोषवति कल्पकोद्याने तिरुक्कडित्ताने ८।६।१०।उद्यानवत्तिरुक्कडित्ताने नित्यं वसंतं श्रीव्यामोहवंतं प्राकारवत्कुरुकापुरीशठकोपेनोक्ते

क्षीरसहितामृततुल्यसहस्रान्तर्गतमेतद्दशकमुपरि वैकुण्ठेस्थापयेदाश्चर्येण । ८ । ६ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

सद्यस्स्वसंगमकृतौ भविता न सात्म्या
प्रीतिस्समेति हरिराप्तुमनाः शनैर्माम् ।
वैकुण्ठतोऽधिगतवान्मतिमित्यवन्या
स्थाने कचिद्बहुमतिं विदधे स षष्ठे ॥ ७६ ॥

भातत्वाच्छ्रीतुलस्याश्रितहृदिशयनाच्छ्रीद्धवक्षस्कभावा-
दाश्चर्योपक्रियत्वात्सुरगणभजनाद्वैरिविध्वंसकत्वात् ।
गोविन्दत्वादशेषाभिमतविषयतोऽभीष्टसच्चित्तकत्वा-
त्सर्वाकाराद्भुतत्वात्स्वपदवितरणे सज्ज इत्याह कृष्णः ॥ ८७ ॥

---

## सप्तमं स्थापयेद्विस्मितो दशकम् ।



स्थापयेद्विस्मितो मां स्वस्वर्णचरणयोरध इत्यर्थित्वाऽनेकबहुदिवसेष्वक्रोशतो मम स्नेहवान्वामनः स्वयं प्रविश्य मम मनोरथं लब्धुं वैलक्षण्येनातिष्ठद्वीक्ष्यमाणः ८ । ७ । १ । अतिष्ठद्वीक्षमाणो मदीयचपलमनोनियंतॄणामशिक्षणीयानामद्वितीयानां पञ्चानामपक्षयनाशाय संश्लिष्य महापादे गजे कृपां कृतवता स्वामिना दातव्यां स्वयं कृपामितः परमहं न जाने । ८ । ७ । २ । कृपामितः परमहं न जानामि स मम मनस्यज्ञाननिवृत्तये वैलक्षण्येनातिष्ठदेतद्विनाऽर्थः कोवेति चेत्त्रयो लोकाश्चार्थो न भवति भ्रमो वेदमाश्चर्यभ्रमो भ्रम एव । ८ । ७ । ३ । आश्चर्यभ्रमभ्रमं न कुर्यां मां वंचित्वा गोपोऽमरहर्यृषभो मत्स्वामी परिशुद्धकान्तिमत्तेजः स्वीयं मच्चिते निवेशितवान्देश उज्ज्वलस्वीयश्रीकृपां कृत्वा । ८ । ७ । ४ । उज्ज्वलस्वीयश्रीकृपां कृत्वा लौकिकैः श्लाघनीयां कीर्त्तिं स्वयं तां प्रदर्श्य दत्त्वा मन्मनस्युज्ज्वलेन मणिपर्वतेनैकेन तुल्योऽतिष्ठत् श्लाघ्यमाना कीर्त्तिरन्या ममैकोऽर्थः किम् । ८ । ७ । ५ । अर्थमन्यं ममैकमर्थं श्लाघ्यं दद्याच्चेत्पश्चात्कस्य स्वस्वात्मानं दद्यान्नीलमाणिक्यपर्वते तामरसवच्छ्रीवक्षःपादनयनशयरक्ताधरनाभिमान् । ८ । ७ । ६ । रक्ताधरनाभिधवलरदनं तेजोवत्कुण्डले एतैः सह सर्वदेशकान्तिश्च मिथोऽहमहमिकया व्याप्नुवस्सुशोणाधरस्मितेन मम हृदये आसीनस्य तद्देशं विनाहं न जानाम्यन्यां कृपाम् । ८ । ७ । ७ । न जानाम्यन्यां कृपां ममेशितोपकारकोऽकांडमेव कृपां कुर्यात् कुर्वतां प्रीतोऽल्पस्य मम चित्ते त्रिलोकीं स्वस्य नित्योदरे निधाय स्थित्वा निर्वृतः । ८ । ७ । ८ । उदरे निधाय स्थितान्यावत उदरे निधाय स्थितामेकां त्रिलोकीं स्वस्योदरे निधाय स्थितप्रकारेण स्थितं स्वामिनमुदरे निधाय स्थिरं निवेशितवानहं मत्या । ८ । ७ । ९ । निवेशि-

तवान्मत्या मम हृदयस्यांतः श्रांतो न नंक्ष्यामि सदा सर्वकालं निरंतराऽनुरूपतरंगेषु प्रहरत्सु शीतलक्षीरसागरस्थं विशालानुरूपकांतिमदुरगशयनमस्मत्परम् । ८ । ७ । १० । कान्तिमदुरगशयनमस्मत्परं लक्ष्मीकान्तं चरणसमाश्रयणप्रकारेणोदारकुरुकापुरीशठकोपेन नाशयितुमुक्ते सहस्र एतद्दशकं जन्मनो दूरीभावाय नाशेन रक्षेत्स्वनेत्रयो रक्तम् । ८ । ७ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

मद्विप्रयोगमसहन्स्वयमेव चार्थी
मामल्पकैकनिलयं बहुमन्यमानः ।
शौरिस्समाक्षिपदिदं मतिविभ्रमः कि-
मित्यात्मनो मुदमभाषत सप्तमेन ॥ ७७ ॥

भव्यत्वाद्रक्षकत्वात्त्रिजगदधिककारुण्यतो गोपभावा-
च्छ्रीलाक्ष्माद्रिमभत्वात्सजनकृतनिजात्मप्रदानप्रभुत्वात् ।
मन्दस्मित्या स्थितत्वाद्धृदि सुकृतिषु चातर्कितानुग्रहत्वा-
त्स्वानां चित्तानपायात्स्वजनहृदि रतो माधवश्चेत्यवोचत् ॥८८॥

---

# अष्टमं नेत्रयो रक्तो दशकम् ।

नेत्रयो रक्तो महावक्रोऽधरेपि रक्तः स्निग्धेंऽतः शुक्लरदनप्रकाशमानतेजःकांतिमच्चंचलमकरकुंडलवान् मेघवर्णः कांतिमत्किरीटश्चतुर्भुजो नम्रशार्ङ्गमुज्ज्वलशंखगदासि-



चक्रवानेको दासस्य ममांतःस्थः ।८।८। १ । दासस्य ममांतःस्थः शरीरवर्त्यण्डावसथो बहिःस्थः सदृशमेवेदमिति वक्तुं योग्यप्रकारवान्न भवति परात्परः परिमलयुक्तगंधांतररसेष्वानंदस्य निवृत्तावध्यस्य सारेणाऽविच्छिन्नानंदमहिमवान् ज्ञान उपरितन एकः । ८ । ८ । २। ज्ञान उपरितनेष्वेकं तस्य कृपया प्राप्तये मम ज्ञानस्यांतर्निवेशितवानहं तदपि तस्य सरसकृपैव ज्ञानं प्राणश्च शरीरं चान्यदनवधिकं सर्वं हेयमेव भवतीति ज्ञानलाभार्थं प्रवर्त्य यावदवध्यारुह्याहमपि स्वयमेव भूत्वा निर्वृतः । ८ । ८ । ३ । अहमपि स्वयमेव भूत्वा निर्वृत यावद्यावतां चादिं स्वयं शिवो ब्रह्मा च भूत्वा विस्तृतमद्वितीयकारणं मधुक्षीरेक्ष्वमृतानि भूत्वा मधुरीभूतो मम शरीरे प्राणे ज्ञाने च स्थितमेकं ज्ञातवान् ।८। ८।४। स्थितमेकं ज्ञातवतो मम तत्र वैलक्षण्यं तदिदमित्येकमपि केषामपि ज्ञातुमशक्यं ज्ञान उपरि साक्षात्कारो दुर्लभो गत्वागत्वा परात्परं केनापि रहितमतीव संगरहितं समीचीनमसमीचीनमिति ज्ञातुमशक्यं सम्यग्ज्ञानमतिक्रान्तम् । ८ । ८ । ५ । सम्यग्ज्ञानमतीत्य गत्वासमीचीनेंद्रियाणि सर्वाणि जित्वैकीभूय स्थितां दुस्तरां महतीं प्रकृतिं नाशरहितां तां ज्ञात्वाज्ञात्वा गत्वा तत्र सुखदुःखानि च्छित्त्वोत्पाट्य

वासनायां विनाशितायां तदहरेव तदानीमेव मोक्ष-स्तदेव मोक्षो मोक्षो भवेत् । ८ । ८ । ६ । स एव मोक्षो मोक्षप्राप्त्या सुखं च तदेव निश्चित्य यत्र कुत्रापि संगेन विना यावतापि रहिता भवेयुश्चेत्स एव मोक्षो मोक्षप्राप्त्या सुखमपि तदेव निश्चित्य को वा मोक्षः किं वा सुख-मिति क्लिश्यंतः क्लिश्यंति क्लिश्यंत एव । ८ । ८ । ७ । अक्लिश्यन्नक्लिश्यन्नक्लिश्यन्निति गृहजनेषु बाह्येषु च संघीभूय तत्राकुश्याश्लिष्यत्सु स्वस्य गमनसमय उन्म-त्तवदुन्मादं प्राप्तस्यानुरागाभिवृद्धिसमये मत्स्वामिना सदृशो गत्वा तत्र मनो लग्नं करोतीति संभवति चेत्समी-चीनो लाभः । ८ । ८ । ८ । संभवति चेत्समीचीनो लाभोऽनुपपन्नमुपपद्यते चेन्नृत्यत्पक्ष्युन्नतध्वजास्मन्मा-यिभावस्तत्तदेव मोक्षं कल्पयित्वैकप्रकारमेव भविष्यद्व-र्त्तमानभूतकालेषु धावित्वा संचरंतो योगिनश्च संति नासंतः । ८ । ८ । ९ । संश्चासन्न सनसन्न सन्नेव सन्ना-स्माकमेक आगत्य मम मनस्यंतः प्रतितिष्ठति वर्द्धमा-नकलावत् क्षीयमाणकलावत्संकोचविकासौ वर्द्धमानां-शुमत्तमोवर्द्धेशद्यमोहौ नाशितवंतो वयम् । ८ । ८ । १० । मोहाज्ञाने निवर्त्त्यं स्वशिक्षकरक्तस्ववर्णकटक-वच्चरणयोरधः कृपां कृत्वा स्थापयिता स्वामिनाऽजभू-तेन शिवभूतेन श्रियःपतिना कृपाविषयीकृतस्य शठ-



कोपस्यैकस्मिन्सहस्र एतद्दशकेन कृपां कृत्वा चरणयो-रधः स्थापयेन्मत्स्वामी नीलमाणिक्यम् । ८ । ८ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

स्वायोग्यतामतिनिवर्त्तनलोलुपेन
श्रीकौस्तुभेन कमलास्तनतोपि तुल्यम् ।
आत्मैकशेषमयबोधितमीश्वरेण
स्वस्य स्वरूपमवदन्मुनिरष्टमे सः ॥ ७८ ॥

प्रासादत्वेन भावाद्धृदि च विभुतयालंमहिम्ना परत्वा-
न्माधुर्याद्देहदेवादिषु च गततया स्वस्वरूपप्रकाशात् ।
अंतस्स्मृत्याप्यभावात्स्वपरमपुरुषैक्यभ्रमध्वंसकत्वा-
ज्ज्ञानाज्ञानप्रदत्वात्प्रकटयति हरिः पुंसि दास्यं स्वमूचे ॥ ८९ ॥

---

## नवमं नीलमाणिक्यदशकम् ।

नीलमाणिक्यपर्वतस्योपरि मणितटाके तामरसव-नानीव श्रीवक्षोऽधरो नयने शयौ नाभिः पादौ धृतांबरं यस्य रक्त उपकारकस्य लक्ष्मीवल्लभस्य मत्स्वामिनः समृद्धजलकेदारकुट्टनादट्टुत्तिरुप्पुलियूरि दुर्लभमायिनो नाम विना वाचारहिता मातरोऽस्य किं कुर्याम् । ८ । ९ । १ । मातरोऽस्य किं कुर्यां सुन्दर मेरोरुपरि संचरन्निबिड-परिव्याप्तप्रभसूर्योऽन्यानि बहूनि तेजांसीव विद्योतमा-नदीर्वकिरीटं हारो नानाभरणानि स्वीयानि यस्य

मत्स्वामिनः पुन्नागसुन्दरोद्यानावृततिरुप्पुलियूरि श्लाघते इयम् । ८ । ९ । २ । श्लाघत इयं स्थित्वा नक्तंदिवं युद्धयज्जलस्य सागरस्य ज्वलनाक्रांतस्य सर्वत्र वर्द्धमानज्वलनेन सह संचरत इव द्योतमानकिरणचक्रप्रभृतिश्लाघ्यमानयुद्धयदायुधधरस्य युद्धं प्रविश्यासुरान्नाशितवतो द्योतमानमणिदीर्घगृहदीर्घतिरुप्पुलियूरः सौंदर्यमेव । ८ । ९ । ३ । नगरसौंदर्यप्रकाशकोद्यानैरिक्षुमहानीवारैः परिवृतेऽनडुत्समृद्धिसुंदरशीतलकेदारैः कुट्टनाट्टुत्तिरुप्पुलियूरि संपत्समृद्धिप्रकाशकं त्रिलोकीं भुक्त्वोद्गीर्णवतो देवनायकस्य नाम संपत्प्रकाशमंतरेण व्याहारवती न भवत्यद्येयं धृताभरणा । ८ । ९ । ४ । धृताभरणानां सौंदर्ये वस्त्रधारणे नूतनकान्तौ च चिंतायोग्यस्वभावो न भवत्यस्या इदं स्थित्वा चिंतितुमुद्योगे कृते सरस्सु विपुलतामरसं विकसति यत्र शीतलतिरुप्पुलियूरि प्रधानस्य त्रिलोकीनियन्तुः पितुः श्रीकृपायां निमग्ना । ८ । ९ । ५ । श्रीकृपायामवगाह्य सर्वकालं समृद्धजलवर्णस्य कृष्णस्योपकारकस्य श्रीकृपाप्रवेशस्य चिह्नं विशदमस्ति श्रीकृपामनुग्रहीतुं तेनागत्योषिते शीतलति रि श्रीकृपा क्रमुकच्छविमत्फलसदृशो मृदुस्वभावाया रक्ताधर एव । ८ । ९ । ६ । मृदुपत्रश्रीमदुदारलतालिंगितेन स्थूलकोमल-



मूलक्रमुकेण विपुलदलकांडकदलीप्रसूतफलव्यापकपरिमलसुरभितसंसृष्टदलनारिकेलानां मध्ये वायुर्वाति यत्र शीतलतिरुप्पुलियूरि निविडसुंदरसंपत्कृष्णस्य चरणावाश्रितेयं मुग्धनायकी । ८ । ९ । ७ । मुग्धनायकी मातॄणां किमुक्त्वा वदामि महासंपत्संस्कृतभाषावेदविद्ब्राह्मणानां यज्ञेषु धृताग्निमहाधूमो गत्वा दृढाकाशेऽमरलोकमाच्छादयेद्यत्र शीतलतिरुप्पुलियूरि फणायुक्तोरगशयनस्य तस्य नाम विना न प्रलपतीयम् । ८ । ९ । ८ । न प्रलपतीयं स्थित्वा नक्तंदिवं शीतलजलवर्णस्य कृष्णस्योपकारकस्य विस्तारपूर्णस्वरवेदवैदिकानां घोषे समुद्रात्स्थित्वा घोषति ग्राहपूर्णेषु तटाकेषु सर्वत्र तामरससमुदायदीपिकाः स्थित्वा विकसति यत्र सुक्षेत्रपूर्णकेदारपरिवृततिरुप्पुलियूर्कीर्त्तिविनान्यत् । ८ । ९ । ९ । अन्यः पर एक उपायः को वास्याः सुंदरशीतलतुलसीपरिमलिततापात्पर्वतमहामणिसौधगृहसुंदरसमुदायैः पूर्णे दक्षिणदिक्तिलकसदृशे कुट्टनाट्टुत्तिरुप्पुलियूरि स्थितस्य माय्युपकारकस्य श्रीकृपा स्यादनया प्राप्ता । ८ । ९ । १० । अनुरूपस्य पूर्णत्रिलोक्या नायकस्य दास्यसिद्धिमदासदासदासस्य शठकोपस्य शब्देनाऽनुरूपे द्रविडमालासहस्र एतद्दशकमभ्यस्तवंतो योग्या जाता महास्वामिनो दास्यं कर्तुम् । ८ । ९ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

अन्यार्हताश्रवणमप्यथ शेषतायाः  
सोढुं न शक्यत इति स्वदशाविशेषम् ।  
अन्यापदेशमवलम्ब्य तदोपयुक्तं  
नारायणैकपरधीर्नवमे जगाद ॥ ८९ ॥

वैलक्षण्यात्स्वमूर्त्तेर्मुकुटमुखमहाभूषणैर्भूषितत्वा-  
त्स्वाहानिकायुधत्वात्प्रलयसखितयोज्जीवने कर्षकत्वात् ।  
भव्यत्वाद्यैश्च संपन्निरवधिकतयाश्चर्यचेष्टत्वयोगान्निष्ठां  
दास्ये स्वकीये प्रकटयति हरिश्चेत्यथाज्ञापि तेन ॥ ९० ॥

---

## दशमं महतो व्यामोहवतो दशकम् ।

महतो व्यामोहवतो दास्यकारेणेव मया तस्मिन्स्मृते वंचित्वा प्रतिरोधशून्यदुर्गतयः सर्वे निवृत्ताश्चातुर्येऽनुसंहिते क्रूरमहापापस्य मम तद्दासानां चरणयोरेव समाश्रयणमेतद्विना त्यागप्रकार इत्येवं कथं हंत विस्मयनीयत्रिलोकीलाभेपि ।८।१०।१। विस्मयनीयत्रिलोकीलाभेपि गत्वा स्वयं स्वयमेव भवेच्चेदपि वर्षन्मेघसदृशश्रीविग्रहस्य स्वामिनो ग्रथितपुष्पवल्लीरकटकवच्चरणयोरधः स्वयमेव दास्ये स्थिरं तिष्ठतां श्रीचरणौ सेवित्वाऽस्मिँल्लोके फलं सुखमहं प्राप्तः सदृशः किं पापिष्ठस्य मम ।८।१०।२।सदृशः किं पापिष्ठस्य ममैतल्लोकानां त्रयाणामेकदा पूरणाय लघुमहाविग्रहं वर्द्धितवतो मद्रक्ततामरसनयनस्य श्रीवाम-



नस्य समीचीनमहापरिमलनूतनकुसुमचरणयोरधः प्रवेशो विसृज्य तद्दासेषु लघुमहामनुष्येषु मम नियंतृष्वत्र संचरत्सु ।८।१०।३। अत्र संचरतो मम हीनता का महापृथिवीं पूर्वं भुक्तोद्गीर्णवतो रक्तसुंदरप्रवालाधरस्य रक्ततामरसनयनस्य मत्स्वामिनोऽभिवृद्धसुंदरगुणा मुखे भवेयुश्चेदिंद्रियग्राहिविग्रहो मन्मनसि तिष्ठेच्चेत्तदनुरूपपुष्पाणि करे तिष्ठेयुश्चेन्मार्गमाश्रित्य धावितुं कृपां कुर्याच्चेत् ।८।१०।४। मार्गमाश्रित्य धावितुं कृपां लब्ध्वा मायिनः सुंदरकुसुमचरणयोरधः सावर्तं धावत्प्रभज्योतिःसमुद्र आनंदं प्राप्य स्थितवानपि नैच्यं प्राप्य संचरति शरीरे जनित्वा स्वगुणान्मयाऽभ्यस्य सूक्तिरूपतां प्राप्य संचरतः काव्यामृतस्य पानस्य सदृशं किं कृत्स्नम् ।८।१०।५। पानस्य सदृशी किं त्रिलोकीसंहारसृष्टिः स्वसदृशरहितकांतिमद्रक्तमुखं गजं संहृतवत्स्वर्णचक्रकरस्य मत्स्वामिनः सदृशरक्तकेशज्वलन्नेत्रदीर्घोऽसुराणां प्राणान्सर्वांश्छित्वा भक्षित्वा संचरंतं पक्षिणं संचारयतो महाद्वितीयमहाकीर्त्तेः ।८।१०।६। अद्वितीयमहाकीर्त्तिरेव सर्वदा यथा तिष्ठेत्तथा स्वयमाविर्भूय मुनिमहाब्रह्मादिबीजं भूत्वा लोकांस्त्रीनंकुरितान्कृतवतोऽद्वितीयमहादेवस्य किसलयचरणयोरधः प्रवेशमंतरा तद्दासानामतिमहासंश्लेषानंद एव प्रतिदिनं सिद्ध्य-

त्वस्माकम् । ८ । १० । ७ । प्रतिदिनं सिद्ध्यत्वस्माकं शीतलजलसमुद्रमुत्पाद्य स्वस्य चरणौ भुजाञ्शिरांसि चासहस्रशानि बहूनि प्रस्तीर्य दीर्घव्याप्तपुष्पकल्पकोद्यानवतः परिपूर्णानेकसूर्यतेजोवतो मणिपर्वतस्यैव शयानस्य दासानां समुदायः । ८ । १० । ८ । दाससमुदायप्रबलपापानि नाशयतश्चतुर्मूर्त्तिर्युद्धशालिचक्रशंखासिचापगदाद्यनेकायुधस्य कुमारस्य सुन्दरपंचबाणमदनपितुर्निर्दोषदासानां दासदासदासभवनचातुर्यमेव सिद्ध्यत्वद्वितीयस्य मम । ८ । १० । ९ । सिद्ध्यत्वद्वितीयस्य मम प्रतिकल्पकल्पं महातसीपुष्पग्राहिविग्रहस्य चतुर्भुजस्य स्वर्णचक्रकरस्य मत्स्वामिनो विश्लेषशून्यदासानां स्वदासदासदासा अस्मत्स्वामिनस्तेषां दासत्वेन वर्त्तनरूपसमीचीनप्रकारः । ८ । १० । १० । समीचीनप्रकारलोकत्रये स्वयं पूर्णं दलवत्कमलनयनं सुन्दरशीतलकुरुकापुरीशठकोपेनोक्ते सहस्र एतद्दशकमभ्यस्यंतः समीचीनपदेन गृहे वर्द्धेरन्परिणीतस्त्रीप्रजाभिः । ८ । १० । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

तां शेषतामपि तदीयतदीयसीमा-
शेषत्वपर्यवसितां पुरुषार्थसीमाम् ।
आविष्कृतां भगवता मुनिरात्मरुच्या-
माचष्ट धिकृततदन्यपुमर्थमन्त्ये ॥ ८० ॥



व्यामुग्धत्वात्स्वकीयेष्वमलघनरुचा वामनत्वेन चाप-
द्बंधुत्वाश्चर्यभावादहितनिरसनाल्लोकसृष्ट्यादिशक्तेः ।
अब्धौ शायित्वयोगाच्छ्रितदुरितहृतेश्चातसीपुष्पकान्त्या
त्वाकृष्टैः स्वीयदास्यावधि विशदयतीत्याह नाथस्य दास्यम् ९१ ॥

इत्थं सूरिर्दिदृक्षोर्द्दशि विषयमयैर्निस्पृहैरेव लभ्यं
स्वानां विश्लेषभोग्यं श्रितविहितसमग्रत्वभूतिं शठारिः ।
स्वापेक्षासव्यपेक्षं स्ववितरणपरं हृद्गतं स्पष्टयंतं
दास्यं स्वं तस्य निष्ठां तदवधिमपि चाप्यष्टमे स्वेष्ववश्यम् ९२ ॥

इति श्रीमत्सहस्रगीतावष्टमशतकं समाप्तम् ।

---

# अथ नवमशतके
# प्रथमं परिगृहितस्त्रीपुत्रा दशकम् ।



परिगृहीताः स्त्रीपुत्राः संबंधिनो बांधवा अन्ये च दर्शनसमये स्नेहिन इत्येव प्रेमास्पदा किमपि नास्ति अष्टौ दिशोध उपरि च सर्वं भुक्तवत उपकारकस्य दासभावेनोज्जीवनं विना नास्ति पश्यत सहायः । ९ । १ । १ । सहाया अपाश्रयाश्च भवंत इव बांधवा अन्ये चोपगतमैश्वर्यमस्ति चेज्जलूकवच्चूषेयुः शरेणैकेन सततरूंश्च विद्ध्वंतमस्मत्कालमेघं प्रतिभूरित्युज्जीवनप्राप्तिमंतरा नास्ति पश्यतार्थः । ९ । १ । २ । अर्थे करे विद्यमाने संचरत पश्यंति चेन्मंगलमिति गृहीत्वोत्तिष्ठेयुस्तमःशालि

दुःखहेतुः दारिद्र्ये दृष्टे हंतेति वक्तारोपि न संति अज्ञानशालिकर्माऽसुराणां नाशायोत्तरमधुरायां जातस्य दयाशालिदासा भूत्वोज्जीवनं विना नास्ति पश्यत रक्षकः । ९ । १ । ३ । शरणं भवेयुरभावकाल इत्येवं संपादिता ऋणं स्वीकृतवंत इव तुच्छा भवेयुस्तदभावेपि तथैव वर्णने किमुत्तरमधुरायां जातस्योदारगुणा एव शरणमित्युज्जीवनप्राप्तिमंतरेण नास्ति पश्यत चातुर्यम् । ९ । १ । ४ । चतुरा इति स्वान् स्वयमेव संमन्यमाना मधुरालापानां मधुरभोगं भुक्तवंत एव कालांतरेऽन्यदेकं प्राप्नुयुः कंपशालिकृत्यानामसुराणां नाशायोत्तरमधुरायां जातस्याभिगमनशालिदासभावेनोज्जीवनमंतरा नास्ति पश्यत सुखम् । ९ । १ । ५ । नास्ति पश्यत सुखं हंत संतमः स्मृत्वा प्राचीनाः कति जनित्वा मृत्वा निवृत्ताः समृद्धचिरंतननगरे उत्तरमधुरायां जातस्योदारगुणानेवोक्कोज्जीवनप्राप्तिमंतराऽन्यः कोपि नास्ति संक्षेपः । ९ । १ । ६ । अन्यः कोपि नास्ति सक्षेपणाऽवदाम महाभूमौ सर्वात्मनां च व्यापारो न कर्त्तव्यश्चित्ते बाल पश्यत हंत दोषो न भवत्यस्मद्गोसमुदायगोपस्योत्तरमधुरायामुत्पन्नस्य दोषरहितगुणानभ्यस्य सर्वदोज्जीवनं पश्यत गुणः । ९ । १ । ७ । उज्जीवनं पश्यत गुणा इदं हंत मायिनः पादं प्रलप्य कालप्रापना-



र्थमनुसंधातुं शक्तानामवद्यरहितानां वर्द्धनसहायतयोत्तरमधुरायां जातस्योदारगुणान्येवाशास्य सहायतया गच्छेदस्मात्किमपि नास्ति श्रेष्ठम् । ९ । १ । ८ । किमपि नास्ति श्रेष्ठं तस्मादित्येवं तस्य विचारे कर्णमलंचिकीर्षो वैरूप्यापादनवदल्पसंबंधेन वृद्धिरप्यपगच्छेन्महांबरध्वजशालिगृहोत्तरमधुरायां जातं मालावद्भुजं कृष्णं विना नास्ति पश्यत शरणम् । ९ । १ । ९ । कृष्णं विना नास्ति पश्यत शरणं तस्य स्थैर्यार्थमागत्य भूमिभारनिराकरणार्थमेवोत्तरमधुरायां जातो हृदं यत्किंचिदपि युष्मद्वस्त्वस्ति चेत्तच्चरणयोः समर्प्योज्जीवत मा विचारयत युष्माकं सकलमपि तं विनाऽन्यन्नास्ति । ९ । १ । १० । किमपि नास्त्यन्यत्तस्मादिति तदेव निश्चित्य मालाश्रितभुजं कृष्णं कुरुकापुरीशठकोपेनोक्तदोषरहितोज्ज्वलद्राविडानामेतस्मिन्सहस्र एतद्दशकमभ्यसितुं शक्ता उपकारका अस्माभिर्दासवंतः प्रागेव । ९ । १ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

आद्ये चकार नवमे शतके शठारि-
स्तच्छेपतानुभवसन्मतिसंमतेन ।
निश्चित्य सर्वविधबंधुतया तमीश-
मापत्सखं प्रणमतेति परोपदेशम् ॥ ८१ ॥

दुःखहेतुः दारिद्र्ये दृष्टे हंतेति वक्तारोपि न संति अज्ञानशालिकर्माऽसुराणां नाशायोत्तरमधुरायां जातस्य दयाशालिदासा भूत्वोज्जीवनं विना नास्ति पश्यत रक्षकः । ९ । १ । ३ । शरणं भवेयुरभावकाल इत्येवं संपादिता ऋणं स्वीकृतवंत इव तुच्छा भवेयुस्तदभावेपि तथैव वर्णने किमुत्तरमधुरायां जातस्योदारगुणा एव शरणमित्युज्जीवनप्राप्तिमंतरेण नास्ति पश्यत चातुर्यम् । ९ । १ । ४ । चतुरा इति स्वान् स्वयमेव संमन्यमाना मधुरालापानां मधुरभोगं भुक्तवंत एव कालांतरेऽन्यदेकं प्राप्नुयुः कंपशालिकृत्यानामसुराणां नाशायोत्तरमधुरायां जातस्याभिगमनशालिदासभावेनोज्जीवनमंतरा नास्ति पश्यत सुखम् । ९ । १ । ५ । नास्ति पश्यत सुखं हंत संतमः स्मृत्वा प्राचीनाः कति जनित्वा मृत्वा निवृत्ताः समृद्धचिरंतननगरे उत्तरमधुरायां जातस्योदारगुणानेवोक्त्वोज्जीवनप्राप्तिमंतराऽन्यः कोपि नास्ति संक्षेपः । ९ । १ । ६ । अन्यः कोपि नास्ति सक्षेपेणाऽवदाम महाभूमौ सर्वात्मनां च व्यापारो न कर्त्तव्यश्चित्ते वाल पश्यत हंत दोषो न भवत्यस्मद्गोससमुदायगोपस्योत्तरमधुरायामुत्पन्नस्य दोषरहितगुणानभ्यस्य सर्वदोज्जीवनं पश्यत गुणः । ९ । १ । ७ । उज्जीवनं पश्यत गुणा इदं हंत मायिनः पादं प्रलप्य कालप्रापना-



र्थमनुसंधातुं शक्तानामवद्यरहितानां वर्द्धनसहायतयोत्तरमधुरायां जातस्योदारगुणान्येवाशास्य सहायतया गच्छेदस्मात्किमपि नास्ति श्रेष्ठम् । ९ । १ । ८ । किमपि नास्ति श्रेष्ठं तस्मादित्येवं तस्य विचारे कर्णमलंचिकीर्षो वैरूप्यापादनवदल्पसंबंधेन वृद्धिरप्यपगच्छेन्महांबरध्वजशालिगृहोत्तरमधुरायां जातं मालावद्भुजं कृष्णं विना नास्ति पश्यत शरणम् । ९ । १ । ९ । कृष्णं विना नास्ति पश्यत शरणं तस्य स्थैर्यार्थमागत्य भूमिभारनिराकरणार्थमेवोत्तरमधुरायां जातो दृढं यत्किंचिदपि युष्मद्वस्त्वस्ति चेत्तच्चरणयोः समर्प्योज्जीवत मा विचारयत युष्माकं सकलमपि तं विनाऽन्यन्नास्ति । ९ । १ । १० । किमपि नास्त्यन्यत्तस्मादिति तदेव निश्चित्य मालाश्रितभुजं कृष्णं कुरुकापुरीशठकोपेनोक्तदोषरहितोज्ज्वलद्राविडानामेतस्मिन्सहस्र एतद्दशकमभ्यसितुं शक्ता उपकारका अस्माभिर्दासवंतः प्रागेव । ९ । १ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

आद्ये चकार नवमे शतके शठारि-
स्तच्छेपतानुभवसन्मतिसंमतेन ।
निश्चित्य सर्वविधबंधुतया तमीश-
मापत्सखं प्रणमतेति परोपदेशम् ॥ ८१ ॥

आपद्बंधुत्वकीर्त्या हृढमतिजननाद्दैत्यनाशाय भूमौ
जातत्वादुत्तरस्यां पुरि मधुरपदालंकृतायां दयाब्धेः ।
बंधोः कृष्णस्य पादाश्रयणमिह विना नो सहायः पुमर्थो
रक्षासामर्थ्यहानेर्भविन इति हितं कारिसूनुर्बभाषे ॥ ९३ ॥

---

## द्वितीयं प्राक्कालमारभ्य दशकम् ।

प्राक्कालमारभ्य तव श्रीकृपां पंकजांगनायाः श्रीकृपां चावलम्ब्य तव मंदिरं सम्माज्र्यानेककाले कुलक्रमेण मार्गेणागत्य दास्यं कुर्वतां दासानां कृपां कृत्वा ज्योतिरास्यं विवृत्य तव तामरसनेत्राभ्यामवलोकय स्वच्छतरंगताम्रपर्णीशीतलकेदारपरिवृते तिरुप्पुलिंगुडौ शयितवन् । ९ । २ । १ । कुले स्थित्वा वृद्धिं कृत्वा तव परिशुद्धदासेषु सन्निहितदास्यं कृत्वा त्वत्स्वर्णपादमनतिक्रम्य मार्गे आगच्छतां दासानां कृपां कृत्वा त्वमेकस्मिन्दिने भूमिप्रमाणतया विततं त्वत्पादपंकजमेव शिरोभूषणं कुरु ध्वजशालिस्वर्णप्राकारपरिवृते शीतलकेदारोद्याने तिरुप्पुलिंगुडौ शयितवन् । ९ । २ । २। शयनकाले शयितवान्कियंतं कालं शयिष्यसे त्वद्दिव्यविग्रहचलनमनुसृत्य सन्निहितकैंकर्यं कृत्वा प्राचीनदास्ये मार्गेणाऽऽगच्छतां दासानां कृपां कृत्वा तटाकव्याततामरसमिव नयनमुन्मील्य त्वमुत्थाय तव ता-



मरसवधूस्त्वं च वैशाल्यशालिलोकत्रये सेवमाने उपविश्याऽनुगृहाण तिरुप्पुलिंगुडौ शयितवन् ।९।२। ३। पुलिंगुडौ शयित्वा वरगुणमंगै उपविश्य वैकुंठे स्थित्वा स्वच्छमच्चित्तमध्यमविहाय मां नियमयन्मयि कृपां कृत्वा शीतलगुणं लोकत्रये संवीभूय विस्मयमानेऽस्मासु नर्तित्वा स्थित्वा कोलाहलं कुर्वत्सु स्फटिकजलमेवे प्रवालवत्स्निग्धाधरे शोणे त्वं द्रष्टुमागच्छ । ९ । २ । ४ । प्रवालसदृशस्निग्धाधरे शोणे त्वं द्रष्टुमागत्य त्वद्वदनचंद्रिकावन्मुक्तानां संचरतः किरणानीव स्मितं कृत्वा त्वच्छ्रीनयनतामरसयोर्भासमानयोः स्थित्वा कृपां कुरु प्रवालसमीचीनपटल्यऽधस्थ शंखयुक्तताम्रपर्णीशीतलतिरुप्पुलिंगुडौ शयितवन् कवलवन्महागजदुःखनाशाय तटाके दाहककोपपक्षिणं संचारितवन् । ९ । २ । ५। दाहककोपपक्षिणं संचार्य स्वर्णपर्वतस्योपरि कालमेववन्महाक्रोधो माली महामालीत्युक्तानां तेषां नाशाय क्रोधं कृत्वा पुरतः स्थितदाहकक्रोधस्वामिन्नुज्ज्वलकिरीट समृद्धकेदारतिरुप्पुलिंगुडिमन् दाहकक्रोधचक्रशंखासिचापगदा धृत्वाऽस्मद्दुःखनिवर्त्तक । ९ । २ । ६ । अस्मद्दुःखं निवर्त्यात्र मां नियमयन्ननिमिषाणामपि तथा निर्वाहको भूत्वा रक्तदलविकसत्तामरसकेदारशीतलतिरुप्पुलिंगुडौ शायिन् अस्माकं दासानां कोला-

हलँ दृष्ट्वा प्रीतिं प्राप्यास्मासु हृष्यत्स्वंतः प्रेम्णि वर्द्धमान एतन्मुग्धलोकेषु पश्यत्सु त्वमेकस्मिन्दिन उपविशास्माकं चक्षुषोरग्रे । ९ । २ । ७ । अस्माकं नेत्रयोरग्रतो लोकाः सर्वे चरणयुगलं नत्वा वर्द्धित्वाऽऽश्रित्य स्वप्रेमपर्याप्ति स्वोक्तिबलेनोपर्युपरि पतित्वा पूजयेरन् तथा चन्द्रस्पर्शिगृहतिरुप्पुलिंगुडिमन्श्रीवैकुण्ठस्थदेव अस्यां प्रदेशयुक्तमहापृथिव्यामत्राप्येकस्मिन्दिन उपविश वैलक्षण्येन स्थलं स्वीकृत्य । ९ । २ । ८ । वैलक्षण्येन स्थलं स्वीकृत्य विस्मयनीयमहापृथिव्यामत्राप्युपविशास्मासु मंगलाशासनं कृत्वा निरंतरं नेत्रयुगलशीतलत्वाय नूतनकुसुमविग्रहं पिबत्सु पंके बालमत्स्यनीवाराणां मध्ये उच्चलंति यत्र समृद्धकेदारतिरुप्पुलिंगुडिमन् मृत्युर्भूत्वा सुराणां कुलं समूलं च्छिन्नवदुग्रकृत्यायुधसमर्थ । ९ । २ । ९ । उग्रकृत्यायुधसमर्थो भूत्वाऽमराणां दुःखनाशायाऽसुराणां दुःखकृत्कूरव्यापारविष मदीयामृत समृद्धकेदारतिरुप्पुलिंगुडिमन्विग्रहेऽनुपमया कुसुमांगनयाऽन्यया भूमिदेव्या संवाह्यमानस्य मृदुचरणस्य क्रूरपापेन दासेन मयापि संवाहनाय त्वमेकस्मिन्दिने आह्वानमागमनं वा कुरु । ९ । २ । १० । आह्वानमागमनं वा कुर्विति घोषंतं समुद्रं मथितवंतम् आहृत्य सम्यक् प्रविष्टस्य



विस्मयनीयजलताम्रपर्णीकवलुतिवळदेशस्य शठकोपस्य जिह्वायां प्रवृत्तानां गाथानां सहस्र एतच्चैकं दशकमभ्यस्यंतो विच्छेदमंतरा लोकांस्त्रीन्मितवतश्चरणयुगलं मनस्यभ्यस्येयुः । ९ । २ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

वंधुत्वतः स्वमनुकंपितवन्तमादा-
वापन्नधाम्नि भुजगाधिपतौ शयानम् ।
स्वापेक्षितं मुनिरयाचत तं द्वितीये
तस्यैकरूपशयनेऽपि च दुःखितोऽभूत् ॥ ८२ ॥

लक्ष्मीसंबन्धभूम्ना मितधरणितया पद्मनेत्रत्वयोगा-
त्स्थित्याद्यैः स्वैश्चरित्रैस्स्वहृदयहरणाच्छ्रीगजेन्द्रावनाच्च ।
तार्क्ष्यासौ चाधिरुह्यारिगणनिरसनाद्देवदुष्प्रापताद्यै-
र्दुष्कर्मोन्मूलनाद्यैः सुचिरकृतधियो माधवश्चेत्यवोचत् ॥ ९४ ॥

## तृतीयमेकसहस्ररूपदशकम् ।

एकसहस्ररूपतया लोकान्सप्त रक्षन्नामसहस्रवानद्वितीयमाहात्म्यवान्मेघरूपश्यामलसमीचीनविग्रहो नारायणोऽस्मदुपकारकः स एव । ९ । ३ । १ । स एव विपुलभूमिं सृष्ट्वोद्धृतवान्स एव तां भुक्त्वोद्गीर्णवान्मितवान्स एव स च स च स च स एवाऽन्यत्सर्वं ज्ञातवंतो वयम् । ९ । ३ । २ । ज्ञातृत्रयीदुर्बोधार्थस्य शास्त्राणि जानंतीति

स्वीकुर्वंतु दुर्ज्ञेयपदार्थं तस्माज्ज्ञानंतः सर्वे हरिं नत्वा ज्ञातवंतो दुःखानां च्छेत्रौषधम् । ९ । ३ । ३ । औषधास्माकं भोगहर्षस्येति महादेवानां समुदायैः प्रलप्यमानमुपकारकं श्यामलदेवं मत्स्वामिनं कृष्णमाकाशलोकं ददंतं देवं मा त्यज पश्य मनः । ९ । ३ । ४ । मनस्त्वां प्रबलपापोहमर्थित्वा दृढमेवावदमिदं मा त्यज पश्य क्षेत्रप्रवृद्धपुष्पतुलसीमालस्य सदृशेन केनापि शून्यस्याऽऽश्रयणम् । ९ । ३ । ५ । आश्लेषणं सौंदर्यपूर्णपुष्पवधूभुजयोर्नैविडचेन करणमसुराणां क्रूरयुद्धानां मथनं च समुद्रेंतरमृतस्य मन्मनसस्तस्यैवैकप्रकारे शिथिलीभावश्च । ९ । ३ । ६ । शरीराश्रितनरत्वसिंहत्ववान्भूत्वैकं शरीरं तीक्ष्णनखैर्विदीर्णवान्नित्यं वसति यत्र महाकाशं वकुण्ठं द्रष्टुं मन्मन एकप्रकारेण चिंतयति नक्तंदिवं च । ९ । ३ । ७ । अत्यंताभावायोभे कर्मणी विनाश्यैकतया शरीरे प्रवेशाभावायोज्जीवयिता यत्र तिष्ठति वेंकटो महापृथिव्यामस्ति गत्वा देवाः हस्ताभ्यां प्रणमंति । ९ । ३ । ८ । प्रणम्य महाकुसुमजलदीपधूपानादाय वर्द्धेमहीत्येतदधिकं तस्माद्दवद्यरहितानादिकीर्ते उरगशयनशायिन्नालिंगनोपायं न जानामि तव चरणयोः । ९ । ३ । ९ । सनालतामरसवासी त्वन्नाभिवासी कांतिमद्दीर्घपरशुमांस्त्वच्छरी-



रवासी दासा भूत्वा सेवमाना अमराः प्रतिदिनं कथं स्तवानि त्वच्छीलम् । ९ । ३ । १० । शीलेनावधिकस्य चरणयोरुपर्यलंकारसुन्दरदीर्घकुरुकापुरीशठकोपोक्तिमालासहस्र एतद्दशकस्य पार्श्वस्थानां वैकुण्ठारोहणं प्राप्तमेव । ९ । ३ । ११ ॥

श्रीदिव्यसूरिचरणवेव शरणम् ।

नारायणे मयि सति स्वभरार्थचिन्ता
नार्हा तवेति विभुना बहुमानभाजा ।
आविष्कृतां निरवधिं निजशीलवत्ता-
मन्याहशीमनुबभूव मुनिस्तृतीये ॥ ८३ ॥

नैकश्रीनामवत्वाज्जगदुदयसुसंस्थापनार्थेहरित्वा-
द्दानान्मोक्षस्य हेयप्रतिभटघटकश्रेणियसंपत्तिमत्वात् ।
प्रह्लादाह्लादकत्वादृषगिरिकटके सन्निधानादिकृत्यैः
शर्वादेः स्वांगदानादकथि यदुपतिः शीलरत्नाकरोऽसौ ॥ ९५ ॥

---

## चतुर्थमञ्जनपूर्णादशकम् ।

अंजनपूर्णासितेक्षणकमलकुसुमवासिरक्तांगनाश्रीवक्षःस्थलक्ष्मीव्यामोहवन्न क्रौर्यपूर्णकांतिमत्सुदर्शनाऽऽवर्त्तवच्छंखधरहस्त त्वां द्रष्टुमभिलषति मन्नेत्रम् । ९ । ४ । १ । नेत्रं त्वां द्रष्टुमभिलषन्मन्मनः संरुद्याग्राहिचिंतावत्स्थित्वाऽऽक्रोशति दिविषद्भिर्मुनिभिः

सर्वदा द्रष्टुमशक्यमनुपगम्य न तिष्ठेयमित्यहमाह्वायामि । ९ । ४ । २ । आकुश्यन्दासश्चाहं श्वा खंडितपुच्छेनाभिमतं सूचयन्निव मम मनः शिथिलं भवति वर्षार्थे तदा पर्वतमुद्धृत्य गोसमूहं रक्षितवन्नसती भवति कृपेति दुःखं प्राप्नोमि । ९ । ४ । ३ । उत्कृष्टमिदमिति तव दास्यं लब्ध्वा त्वद्भ्यः को वेति मुग्धं मन्मनो व्याकुलं भवति दिविषद्दानवानां सर्वदा ज्ञातुमशक्यसिंहभूत स्वामिन् । ९ । ४ । ४ । सिंहभूतस्य स्वामिनोऽमरोपकारकस्य महतो ब्रह्माणं पूर्वं सृष्टवतो रेखाकांतिमदुरगशयने शयानस्य श्यामलस्य चरणौ द्रष्टुमभिलषति मनः । ९ । ४ । ५ । मनस्त्वां द्रष्टुमभिलष्य मन्मनसि स्थिरं निहितवान् देवानां सर्वेषां वृद्ध भासमानप्रभज्योतिष्युन्नतेऽद्वितीय त्वामनुभवति मदंतःकरणं प्रीतम् । ९ । ४ । ६ । प्रीत्यैव त्वामनुभवतो मम मनसोंतःप्रदेशस्यांतः प्रतिष्ठितो भूत्वा स्थलपर्वतामलाधिकदानवस्य वक्षो विशालं द्विधा कुर्वन्नख नरसिंहभूतविग्रह । ९ । ४ । ७ । अवयवीभूतानां षण्णां समयानां सर्वेषां प्रतिभटत्वेन स्थितः स सर्वेषां पदार्थानामणुभूतमादिं देवानां सर्वेषां कारणं कृष्णं दृष्टवानस्मि । ९ । ४ । ८ । दृष्टवानस्मि मन्नेत्रयुगलस्यापर्याप्ति रूपः सन् प्राचीनपापानि समूलं छित्वा दासानाममृतभोजनाय वाङ्काला अवदमण्डस्थामरस्वामिदासोऽहम् । ९ । ४ । ९ । दासोयमिति मम पूर्णकृपां कुर्वंतं महांतं पूर्णकीर्तिसुन्दरपक्षपक्षिध्वजमन्यूनं लोकान्मितवत्पादमाश्रित्य दासस्य ममोज्जीवनस्य प्रकारः । ९ । ४ । १० । अविच्छिन्नमदगजं हिंसितवंतं पंकपूर्णकेदारसुंदरकुरुकापुरीशठकोपेन शतश उक्ते एकस्मिन्सहस्र एतद्दशकं प्रेमैव दद्यादिविषदां भोग्यप्राणस्य । ९ । ४ । ११ ॥



श्रीदिव्यसूरिचरणावेव शरणम् ।

शीलाधिकः श्रियमुरस्थलतो दधानो-
प्यात्मेप्सितं न दिशतीत्यतिमात्रखिन्नः ।
लब्ध्वा ततः कमपि तस्य कृपाकटाक्ष-
मद्राक्षमीशमिति स प्रजहर्ष तुर्ये ॥ ८४ ॥

लक्ष्मीवक्षस्त्वभावात्स्वजनसुलभतापर्वतोद्धारणाद्यै-
र्दुर्ज्ञेयत्वात्सुरादेरखिलपतितया नाकिनां वृद्धभावात् ।
स्वेषां हृद्वासितायाः स्वजनवशतया तत्र चासक्तिभूम्ना
स्वस्वामित्वादिबन्धाज्जगदवति हरिश्चेत्यभाणीच्छठारिः ॥९६॥

---

## पञ्चमं भोग्यप्राणपुरुषादशकम् ।

भोग्यप्राणपुरुषा यूयं चाह्वानं कृत्वाऽत्र किमन्मत्प्राणपीडायै कूजनं मा कुरुत कोकिलांगना मम प्राणं कृष्णमुपकारकं यूयमागमनाय नाह्वयथ मम प्राणमा-

हूय ददतामप्येतावदपेक्षितं किम् । ९ । ५ । १ । एतावदपेक्षितं न भवति हंत क्रौंचांगनाः कियत्पर्यंतं यूयं युष्मत्पुरुषाश्च द्रवीभूय क्लिश्यथ विस्मयनीयो गोविंदः सत्यवादी न भवति कस्यापि तावदेव भवेदितः परं मम प्राणस्तत्करगतः । ९ । ५ । २ । तत्करगत एव मम पूर्णप्राणः क्रौंचांगनाः किमप्युक्त्वा यूयमवगाह्य नृत्यथ पार्श्वे सर्वतस्तपोऽकृतवत्याः पापिष्ठाया मम प्राणोऽत्रास्ति किं किमुक्त्वा धरामि युष्माकं शिथिलाक्रोशशब्दाञ्छ्रुत्वापि । ९ । ५ । ३ । कूजितशब्दं श्रुत्वाप्यस्मत्कृष्णो मायी नाविर्भवेदुपजृंभमाणशब्दान्मा कुरुत यूयं युष्मन्पुरुषाश्च मयूर्यः वाङ्मनः कर्म चास्माकं तत्रैव शरीरं प्राणश्च मध्ये स्थित्वा क्लिश्यति । ९ । ५ । ४ । मध्ये स्थित्वा परिभ्रमंत्यो मदीयशारिका युष्मत्स्वभावे कोप्यवकाशो नास्ति मा कूजत इंद्रजालानि प्रदर्श्य मां सप्तलोकीं स्वीकृतवानस्मल्लक्ष्मीवक्षा अस्मत्प्राणं भक्षितुं सम्यग्व्यवसितः । ९ । ५ । ५ । समीचीनं विचार्य मया वर्द्धित बालशुकशाव मधुरशब्दं त्वमव्यक्तं मा कृथाः मम पूर्णप्राणः काकुत्स्थस्त्वद्रक्तास्यसदृशाधरनयनकरचरणवांस्त्वत्स्निग्धश्यामलरूपवान्संश्लेषं कृत्वा विश्लिष्टो जातः । ९ । ५ । ६ । संश्लेषं प्राप्य विश्लिष्टस्य सुंदरतामरसनयनस्य रक्ताधरस्याम्लानमदीयनीलमाणिक्यस्य कृष्णस्य मायिनः सदृशं नम्रचापेन विद्युता युक्ता मेघसंघा मा प्रदर्शयत युष्मद्रूपं मम प्राणस्य तत्काल एव । ९ । ५ । ७ । प्राणस्य तत्काल इति युष्मान्याचितवत्या मम यूयं पिकबालाः कृष्णस्य नामान्येव कूजित्वाऽनाशयत दधिपर्युषितोदनेन दुग्धोदनं च दत्त्वा वार्त्ताभ्यासकरणस्य समीचीनसंपदमभोजयत स्वभाववंतः । ९।५।८। स्वभाववद्भ्रमरैः सह भ्रमरविशेषा गानं मा कुरुत व्रणच्छेदे कुंतवेधसदृशो भवति युष्मद्भोग्यध्वनिः शीतलमहाजलतटाके विकसिततामरससदृशविशालनेत्रः कृष्णोऽस्मत्प्राणमपहृत्य विश्लिष्य गतः । ९ । ५ । ९ । गंतुमुद्युक्ता वयमप्यस्मदाकाशदेशवर्तैकीभूता अभूम केदारे समीचीननारदसमूहाः संघीभावेन किमितः परमाभरणसनीचीनशरीरं क्रमेण गन्तुमुद्युक्तं समृद्धसमीचीनानंदं प्राप्य सर्वत्र समृद्धं भवति । ९ । ५ । १० । आनंदं प्राप्य :सर्वत्र प्रवृद्धमनेककल्पं स्वस्य गुणं स्तोतुं स्वस्य कृपां कृतवंतं मायिनं सुन्दरकुरुकापुरीशठकोपोक्ते सहस्र एतस्य नवभिरेकस्य त्रयोलोकाश्च द्रवेयुः । ९ । ५ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

आलोकनं च तदचाक्षुषमित्यथार्त्तो
दृष्ट्वा च तत्स्मरणहेतुपदार्थजातम् ।
आसन्नहानिकतयावसितस्वसक्तो
दुःखेन दुस्सहतरेण स पंचमेऽभूत् ॥ ८९ ॥
प्राणत्वादद्भुतत्वादपि च सुविशदत्वेन भव्यत्वयोगा-
ल्लक्ष्मीपक्षस्वभावाद्रघुकुलजननान्नीलरत्नाभमूर्त्या ।
कृष्णत्वादब्जदृक्त्वात्परमपतितया चेश्वरं संश्रिताना-
मूचे धीमाञ्छठारिः स्वगुणगरिमसंस्मारकं सर्वदर्शी ॥ ९७ ॥

---

## षष्ठं द्रवति हृदयं दशकम् ।



द्रवति हृदयं हा आत्मनो दुर्भरः सन् प्रवहत्यभिनिवेशश्च हा किं कुर्यां भक्तोऽहं वीथीषु सर्वासु कल्हारसुगंधिततिरुकाट्करैसादरस्य मायिनो मायायाः प्रतिस्मृतिः । ९ । ६ । १ । प्रतिस्मृतिप्रतिवचनं मनोभिदुरं समुद्रवति कर्मग्राहिगुणे गीयमानेपि दह्यते मम पूर्णप्राणः सरःशालिसुंदरोद्यानसुंदरकाट्करैमत्पितः स्मर्तुं न शक्नोमि मया त्वद्दास्यकरणस्य प्रकारम् । ९ । ६ । २ । प्रकारेण मनो वंचयित्वा प्रविश्य मां द्रवीभूतं कृत्वा मम प्राणो भूत्वा मम प्राणं भुक्तवतः संपत्समृद्धोद्यानसुंदरकाट्करैमत्पितुः कालमेघवर्णस्य तस्य कपटं ज्ञातु न शक्नोमि । ९ । ६ । ३ । ज्ञातुं न शक्नोमि स्वस्यांतः सर्वेषु लोकेषु तिष्ठत्सु मार्गेण स्वयमपि तत्र



तिष्ठत उपकारकस्य परिमलवासितोद्यानसुन्दरकाट्करैमत्पितुः क्षुद्रमत्पूर्णप्राणभोजन श्रीकृपाम् । ९ । ६ । ४ । श्रीकृपां कुर्वन्निव मदंतः प्रविश्य रूपं च पूर्णप्राणं च सहैव भुक्तवतः श्रीसमृद्धोद्यानसुंदरकाट्करैमत्पितुः श्यामलवृद्धिमद्विग्रहस्य मत्कृष्णस्य कपटानि । ९ । ६ । ५ । मम कृष्णस्य कपटं ममज्जर्भवति तेन कृष्णेन भुक्तस्य मम पूर्णप्राणस्यर्जीषमिदं क्षुद्रावलोकनं प्राप्य प्रलप्य नक्तं दिवं मत्कृष्ण इति तत्काट्करै स्तौति । ९ । ६ । ६ । काट्करै स्तौति तदंतः कृष्णेति वदति प्रेमव्याधौ वर्द्धमाने स्मृत्वा द्रवीभूय नश्यति दास्यपरिगृहीतृवन्मदात्मानं भुक्तवता मायिना भुक्तावशिष्टतां प्राप्तो मम पूर्णप्राणो भुक्ततां प्राप्य । ९ । ६ । ७ । स्वीकारं भुक्तवानित्येतद्विनाऽऽगत्य मम प्राणं स्वयं भुक्तवान् प्रतिदिनमागत्य मां कात्स्न्र्येन स्वयं भुक्तवान् नीलजलमेघसुंदरकाट्करैमत्पितुर्दास्यं न भवत्यनुभूतं मत्पूर्णप्राणेनानुभूतम् । ९ । ६ । ८ । कस्य प्राणेनाऽनुभूतं मत्प्राणेनाऽनुभूतं महादलतामरसनयनस्य फलाधरस्यैकनीलवर्णमेघसदृशस्य काट्करैमंदिरशालिनः श्रीसौंदर्य्यवच्चतुर्दीर्घभुजस्य देवसागरस्य । ९ । ६ । ९ । समुद्र त्वां गिलामि पश्यामि चेदित्यादरं प्राप्तं मां विना मत्तः पूर्वं मनोरथं कृत्वा स्वयं मां कात्स्न्र्येनापि-

न्मेघस्य सदृशः कादकैरैपिता त्वरावानेव । ९ । ६ । १० । कठिनो भूत्वा कंसं हतवंतमुपकारकं ध्वजवत्प्राकारसुन्दरकुरुकापुरीशठकोपेनोक्ते रूपपूर्णे सहस्र एतद्दशकेन जन्मान्तं प्राप्नुयान्नाशं पश्यतास्मन्मृगतृष्णा । ९ । ६ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

स्वस्यात्मतामगणयन्स्वयमर्थयित्वा
स्वं प्राप्य हर्षविवशो हरिरित्यधस्तात् ।
यच्छीलमन्वभवदस्य तदेव दैवा-
त्संस्मृत्य स द्रुतमना व्यसनी च षष्ठे ॥ ८६ ॥
आश्चर्येहान्वितत्वादखिलपतितया चान्तरात्मत्वभूम्ना
शक्ये शक्तत्वभूम्ना जलदतनुतया भव्यताकर्षकत्वात् ।
औदार्यादेर्विशिष्टादपि च भवभृतां रक्षणे तीव्रसङ्गा-
द्विस्मर्तुं नैव शक्यो हरिरिति शठजित्कंसजेतारमाह ॥ ९८ ॥

---

## सप्तमं मत्सागरतीरोद्यानदशकम् ।

मत्सागरतीरोद्यानांतःसमुद्रपरिवाहमुखे आहारमन्विष्यात्र प्रीत्या वर्त्तमाना रक्तपादमुग्धनारदास्तिरुमूलिक्कले वसतो मधुपूर्णसुन्दरतुलसीककीरीटस्यास्मत्कुंभनर्त्तकस्य मम दूता भूत्वा युष्मत्पादौ मम शिरसि योजयत युष्मदीयैः । ९ । ७ । १ । युष्मदीयविश्लेष-



मप्राप्य यूयं युष्मत्पुरुपार्श्व संश्रितप्रणयाः सारससंघाः सुंदरमूलिक्कलवासिना मदीयानामपवादं प्राप्यात्र किं स्वेन चापमानं प्राप्य स्वीयैः सह तत्र वर्त्तमानस्य स्वस्योचिता न भवामः पृच्छत । ९ । ७ । २ । उचिता न भवामः पृच्छत तटाकजलमुखे आहारं विचिन्वंतो बकसंघा सारससंघाः शीतलमूलिक्कले नित्यं वसतो रक्तकमलकुसुमसदृशनयनशयपादस्य रक्तस्निग्धाधरस्य तत्कमलपत्रसदृशश्रीविग्रहस्य स्वामिनः । ९ । ७ । ३ । श्रीविग्रहवतः स्वामिनः क्रूरपापया मया विसृष्टा दूता भूत्वा तिरुमूलिक्कलाभिवृद्धिमन्नगरद्वारि स्थिताः सुन्दरमेघाः श्रीविग्रहं तस्यानुगृहाणेति वदत चेद्युष्माकं स्वविग्रहकांतिं दूरीकृत्य विशदाकाशं निराकुर्यात्किम् । ९ । ७ । ४ । विशदाकाशे शीघ्रं प्रधाव्याग्निचक्रसदृशविद्युद्भासमानकान्तिमन्मेघास्तिरुमूलिक्कले नित्यं वसतः कांतिमत्तेजसो विशदाकाशश्रीदेशवतः क्रूरपापाया मम मनसि नित्यं वसतो मधुकणवर्षत्केशस्य मद्दूतवाक्यं वदत । ९ । ७ । ५ । दूतवाक्यं वदत परिशुद्धशब्दमुखा भ्रमरसंघा पुष्पेपृद्धुष्य मधुपानस्य योगोद्याने मूलिक्कले नित्यं वसतो नारीं स्वस्य वक्षसि निवेशितवतो मन्मुखवचनं दूतवाक्यं वदथ चेत्कांतिमद्वलयानि वस्त्रं च । ९ । ७ । ६ । कांतिमद्-

ल्यानि वस्त्रं चादाय दुस्तरपापाया मम भुजौ त्यक्तवंतं व्याप्तकीर्ति तिरुमूलिक्कले नित्यं वसंतं पंकजाक्षं कांतिमत्प्रवालाधरं दृष्ट्वैकस्मिन्दिवस एकां परिशुद्धवार्त्तां विपुलोद्यानमुखक्रौंचसंघान्ममैकां संवदत । ९ । ७ । ७ । ममैकां वदत महोद्यानमुख आहारं विचित्य चित्ताह्लादं संश्लिष्यंतो भ्रमरसंघा भ्रमरविशेषा घनत्वशालिदृढप्राकारैः परितो व्याप्ते तिरुमूलिक्कले नित्यं वसतः क्षेत्रशाल्यतसीविग्रहस्य सुंदरतुलसीकिरीटस्य । ९ । ७ । ८ । सुंदरतुलसीकशिरसः स्वर्णचक्रहस्तस्य जलधृतबालसारसतिरुमूलिक्कलस्वामिनो धृताभरणस्तनवैवर्ण्यं प्राप्य ममोभयोः कुसुमनयनयोर्जले पूर्णे स्वयं स्वमादाय दूरीभवनं दया न भवतीति वदत । ९ । ७ । ९ । दया न भवतीति वदत महाजलमुख आहारं विचित्यानंदोत्पादाय संश्लिष्यंतो मृदुगतयो हंसा अतीव शरीरे शैथिल्यं प्राप्य वस्त्रस्रंसनमपि प्राप्ताहमंतःस्वरूपनाशाभावाय तिरुमूलिक्कले वसतः । ९ । ७ । १० । विच्छेदमंतरा तिरुमूलिक्कले नित्यं वसदुज्ज्वलतेजोविच्छेदशून्यसुंदराव्यक्तोक्तिशुकालापायाः प्रलपितोक्तिरूपं च्युतिरहितसुंदरकुरुकापुरीशठकोपेन सादरमुक्ते च्युतिरहिते सहस्र एतद्दशकं व्याधिं छिंद्यात् । ९ । ७ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।



स्वीयं वियोगिजनहंतृनिजाभिरूप्यं
विस्मृत्य संश्रितजनैर्वसतस्सदैव ।
अर्चाहरेः कचन तत्प्रतिबोधनाय
दूतीचकार विहगानधिसप्तमं सः ॥ ८७ ॥

रम्यत्वाच्छ्रीतुलस्याश्रितजनसहितत्वेन पद्माक्षतायाः स्वामित्वात्सत्परंज्योतिरिति कथनतः श्रीधरत्वातिकीर्त्या । पुष्पश्यामत्वभूम्ना रथचरणमुखस्वायुधत्वादुदंतैः शौरेर्धीमाञ्छठारिर्घटकमुखसुविस्रंभणीयत्वमाह ॥ ९९ ॥

---

## अष्टमं निवर्त्तकस्य पापाभिधानदशकम् ।

निवर्त्तकस्य पापाभिधानामंतःकरणे तं स्थापयितुं मनस्यध्यवसाययुक्तचिंतानां परिमलवच्छीतलकुसुमोद्यानपरिवृतस्य तिरुनावाय्स्थलस्योपसर्पणोपायोऽस्ति किं पापिष्ठस्य मम । ९ । ८ । १ । लतासुंदरावलग्नकोकनदांगनावल्लभस्य निशितकुंतविशालनयनमुग्धनीलावल्लभस्य महतो नित्यवासस्थान उद्यानपरिवृततिरुनावायि दासस्य ममोपगमनप्राप्तिकालः को वा । ९।८।२। को वोपगमनप्राप्तिकाल इति सर्वदा व्यापारांतरचिंतां विना नयनजलानि स्रावयामि अवद्यरहितश्रीनारायणवासस्थाने तिरुनावायि सभायां प्रवेशस्यैकं दिवसं न जानामि । ९ । ८ । ३ । दिवसान्वा न जानामि मम विद्यमानानहमपि विच्छेदरहितदास्यकर्म कर्तुं

प्राविशं दैर्ध्यपूर्णकुसुमोद्यानपरिवृते तिरुनावायि खड्ग-सदृशविशालनयनमुग्धनीलावल्लभ । ९ । ८ । ४ । वल्लभस्य कुसुमांगनाया भूम्यंगनायाश्च निर्वाहकस्य लोके प्राणिनां देवानां सर्वेषामपि व्योमनिर्वाहकस्य सादरनित्यवासस्थानं तिरुनावायं नेत्राभ्यां परिपूर्णं हर्षितो भविष्याम्यत्र कदा वा दृष्ट्वेव ९।८।५। दृष्ट्वेव दृष्टे भविष्यतोऽत्र कदा वा नयने भक्त एव तव भूत्वा निर्वृतोहमवद्यं विना भ्रमरपूर्णपुष्पोद्यानैः परिवृते तिरुनावायि स्वीकृत्यैव नित्यं सन्नस्मद्गोपनायक । ९ । ८ । ६ । नायकीभूतान्महाबलेर्भूमिं गृहीतवन् देवासुरं संहृतवन् लक्ष्मीवल्लभ नावायि नित्यं वसन्मम नारायण पूर्ण हा हा दासोयमिति कृपां कुरु । ९ । ८ । ७ । कृपां मा कुरु वा कृपां कृत्वा दासं मां पदार्थं कृत्वा त्वत्स्वर्णचरणयोरधःप्रवेशाय स्थापय वाऽज्ञानं विना तव मन्मनसि स्थापनाऽनुगुणं वैशद्यमेव प्रयच्छ सुंदरतिरुनावायि मदीयदेव । ९ । ८ । ८ । देवानां मुनीनां सर्वदा द्रष्टुमशक्यस्य त्रयाणामादेरेकत्रिलोकीनिर्वाहकस्य देवस्य सादरनित्यवासस्थानस्य तिरुनावायः के वोपगमनं प्राप्नुयुरितः परं हंत । ९ । ८ । ९ । हंतोपगमनप्राप्तिकालः कदेति सर्वदा चित्ते क्षुभितः श्रियःपते इत्याह्वयामि गुच्छपूर्णकुसुमोद्यानैः परिवृते तिरुनावाय्यागत्यैव नित्यं वसन्म-



हामणिवर्ण । ९ । ८ । १० । वर्णवन्मणिगृहसमीचीननावायि वासिनं दृढप्राकारसुंदरकुरुकापुरीशठकोपस्य गीतिपूर्णद्राविडसहस्र एतद्दशकमभ्यस्यंतो भूमिं परिपाल्य परिमलेन वासिता भवेयुर्मल्लिकायाः ।९।८।११।

श्रीदिव्यसूरिचरणावेव शरणम् ।

ईशे समाजिगमिषत्यपि दूतवाक्यै-
स्तावद्विलंबमसहन्मुनिरस्य भौमम् ।
देवीजुषः कमपि देशविशेषमारा-
द्यायां कदेत्यवधिमार्यपदष्टमेन ॥ ८८ ॥

वल्लीमध्यत्वयोगादपि च सुविदितश्रीवचोवाच्यभावा-
द्भूमाद्यैश्वर्ययोगादवतरणदशासाहचर्याच्च भर्तुः ।
संधातृत्वात्सुबोधप्रदुरितहरत्वात्समासन्नभावा-
ल्लक्ष्म्याः श्रीशं शठारिः प्रथयति च सुमज्ञानिभावेन नाथम् १००

---

## नवमं मल्लिकापरिमलितदशकम् ।



मल्लिकापरिमलितदक्षिणानिलो बाधते हा सुंदरकुरुंजिस्वरो वेधयति हा गच्छत्किरणा संध्या मोहयति हा रक्तवर्णसमीचीनमेघास्तक्षंति हा दलवत्सुंदरतामरसनयनेन स्वामिना गोपर्षभेण सिंहर्षभेण मन्मायिना संश्लिष्टाभ्यां स्तनाभ्यां भुजाभ्यां प्रवेशस्थानं न जानीमोऽसहायाः । ९ । ९ । १ । प्रवेशस्थानं न जानीमोऽसहाया हा घोषं कुर्वाणा घंटा दक्षिणानिलो वेणुर्दा

दिवसबाधिका संध्या सुन्दरचंदनं हा पंचमो यूथिकाशी-
तलोत्तरानिलो हा विस्तीर्णां भूमिं सृष्ट्वोद्धृत्य भुक्त्वोद्गीर्य
मित्वा सर्वत्र रक्षन् गोपो मायी युद्धभूमावसुराणां मृत्यु-
र्नागच्छत्यथ स्थित्वा मत्प्राणरक्षणस्योपायः को वा ।
९ । ९ । २ । अथ स्थित्वा मत्प्राणरक्षणस्योपायः को
वोभयोः कुचयोर्नम्रीभवतोः सूक्ष्ममध्ये भज्यमाने
दुःखमहासंगमं कृत्वा शरीरेऽवगाह्य त्यक्त्वा मां विसृज्य
विश्लेषी कृष्णः कपटोऽद्वितीयबालसिंहो मन्मायी
नागच्छति तामरसनयनो रक्ताधरश्च नीलशीतलमहाक-
चाश्चत्वारो भुजा पापिष्ठाया मम मनस्येव स्थित्वा
बाधते हा । ९ । ९ । ३ । पापिष्ठाया मम मनस्येव
स्थित्वा बाधंतेऽहो उत्तरानिलः शीतलोत्तरानिल उष्णा-
निलो हा आद्रियमाणश्शीतलो विधुरुष्णविधुर्हा मृदुकु-
सुमशय्योष्णशय्या हा पक्षसुंदरपक्षिमद्देवभृंगमर्दित-
मत्प्रीत्वं सुन्दरपुष्पमिदं हा प्राणस्य भरो न प्रकाराऽ-
स्माकं मनोपि सहायो न हा । ९ । ९ । ४ । अस्माकं
मनोपि सहायो न हा गोप्रवेशवत्संध्या च भवति हा-
स्माकं गोपस्य स्वहृदयं पाषाणो हा तस्य मधुरो वेणु-
र्बाधते हा अस्माकं सहाया इत्युच्यमानाः सख्यश्चास्म-
त्पूर्वं तस्य मुह्यंति अस्माकं पूर्णप्राणस्य रक्षणस्योपायः
कस्तस्य कृपालाभकालो दुर्लभ एव । ९ । ९ । ५ ।



तस्य कृपालाभकालो दुर्लभो हा तस्य कृपाया
व्यतिरिक्ताः कृपा न भवंति तत्कृपालाभपर्यंतं प्राणो
न तिष्ठेत् बाधिका दिवसस्य संध्या च मनोपि न
पश्यामि शिवेन सह ब्रह्मणोदारश्रीदेव्या चाऽऽश्रितः
श्रीदेहो मत्प्राणं बाधते कृतःपरं प्रवेशस्थानं किं
करिष्यामि कस्य किं वदामि मातरः । ९ । ९ । ६ । कस्य
किं वदामि मातरः पूर्णप्राणस्य परिमाणवान्न भवत्ययं
तीक्ष्णशीतलोत्तरानिलो मेघसमानविग्रहेणास्मत्कृष्णेन
कपटेनापहृतं तदसहायं मनस्तत्स्थल एव श्रीमदगरु-
धूमो वीणातंत्री पंचमः शीतलार्द्रचंदनमालोड्य युद्धो-
न्मुखोत्तरानिलशीतलमल्लिकाकुसुमनवीनपरीमलं गृही-
त्वा वाति हा । ९ । ९ । ७ । नवीनपरिमलं गृहीत्वा
वाति हाऽभिवर्द्धमानबालोत्तरानिलोऽल्पो रक्ताकाशो
हा तथा संश्लिष्य गतस्याऽस्मत्कृष्णस्य कपटः कृष्णा-
त्क्रूर इतः परं तदुपरि मधुपरिमलमल्लिकाग्रथितमाला-
सुन्दरार्द्रांगरागस्तदुपरि पंचममंतर्भाव्य तथा संश्लिष्य
मधुरकृपावद्गोपीनामेव वाद्यमानतन्मधुरवेणोरेव नोज्जी-
वाम्यहम् । ९ । ९ । ८ । वाद्यमानतन्मधुरवेणोरेव
नोज्जीवाम्यहं तदुक्त्वा मध्ये मध्ये स्वयं कृतालंकारदृ-
त्यक्तनेत्राभ्यामेकमुक्त्वा परिशुद्धालापगीतिभिरेकमवलो-
क्योन्मादप्राप्तिं मुखे भासयित्वा क्लेशित्वा क्लेशित्वाऽ-

बलानां मनसि विश्लेषविनाशाय गीयमानं गानं यत्किंचिदपि न जानीमो मातर्मातः संध्याप्यागता मायी नायाति । ९ । ९ । ९ । संध्याप्यगता मायी नायाति महाघंटासु ध्वनिं कुर्वंतीषु प्रबलवृषभसंश्लिष्टाः सुंदरसमीचीनबालगावः ससंभ्रमं संचरंति हा घोरा वेणवोऽव्यक्तं शब्दायंते हा अधिककांतिवृद्धिमतीषु यूथिकासु जातीषु मल्लिकास्ववगाह्य भृंगाः शब्दायंते हा समुद्रोप्याकाशे स्थित्वाऽऽक्रोशति हा किमुक्त्वा जीवाम्यत्र तं विहाय ९ । ९ । १० । तं विहाय दूरे भूत्वा प्राणं धर्त्तुमसमर्थानां धृताभरणानां गोपीनां सन्ध्याक्रोशं तं विहाय विश्लेषस्यैव क्लेशं प्राप्य सुन्दरकुरुकापुरीशठकोपेन मारेणावनिं भुक्त्वोद्गीर्णवत उपर्युक्ते सहस्र एतद्दशकमादायावन्यामाकुश्योत्थित्वा जीवत दासास्तमुक्तं व्यामोहवंतमुपगम्याश्रित्य । ९ । ९ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

स्वमाप्तिकालमविभावयती निदेशे
कृष्णे गवामवनधर्मिणि गोपिकानाम् ।
सायं समागमविलम्बिनि योऽवसाद
आर्सीत्स एष नवमे स्फुरितः शठारिः ॥ ८९ ॥

पद्माक्षत्वप्रसिद्धया जगदवनतया भव्यताद्यैश्च सारग्राहित्वाद्गुणाढ्यैर्हर्षितजनतया स्वाङ्घ्रिदानादजादेः । श्यामत्वाद्भव्यचौरत्वत उत सरसस्मेरचेष्टत्वभूम्ना नः कूटस्थोऽत्र सिद्धयुन्मुखसमयतया व्यापयामास कृष्णम् १० ।

---



# दशमं व्यामोहवंतदशकम् ।

व्यामोहवंतमुपगम्याश्रित्योज्जीवत पापनाशाय दिवसे रात्रौ कमलकुसुमं समर्प्य यूयं सागराहन्यमानप्राकारपरिवृतश्रीकृष्णपुरे वटस्योपरि शयितस्य चरणयुगलम् ।९।१०।१। मधुविकासवत्कुसुमानि समर्प्य यूयमाश्रयत कर्कटाश्रितकेदारपरिवृतपरिखासमीपे रजतनिर्मितप्राकारपरिवृतश्रीकृष्णपुरमनुसंधाय प्रतिदिनं प्रणम्य वर्द्धध्वं भक्ताः । ९ । १० । २ । भक्ता युष्माकं दुःखनिवृत्तये यूयमेकीभूय विकस्वराम्लानकुसुमानि समर्प्य यूयमाश्रयत भ्रमरगानयुक्तोद्यानपरिवृते श्रीकृष्णपुरेऽडनायकममरस्वामिनमेव । ९ । १० । ३ । मृगीशैथिल्यकृन्नयनमुग्धनीलानायकं मधुम्लानिशून्यकुसुमानि समर्प्य यूयमाश्रयत आकाशारूढप्राकारपरिवृते श्रीकृष्णपुरे स्वयमादरवान्स्वामी शरणं भवेत् । ९ । १० । ४ । शरणं भवेत्स्वचरणसमाश्रितानां सर्वेषां मरणं भवति चेद्वैकुण्ठप्रद उपकारको रक्षापर्याप्तप्राकारपरिवृतश्रीकृष्णपुरधरणीपतिः स्वस्मिन्ननुरक्तानामनुरागी भवेत् । ९ । १० । ५ । अनुरक्तो भवेत्स्वचरणसमाश्रितानां सर्वेषां शोणहेमदेहहिरण्योदरविदारकः समीचीनस्वर्णनिर्मितप्रकारपरिवृते श्रीकृष्णपुर आदरवान्नित्यं

स्वस्य सत्यानां सत्यः । ९ । १० । ६ । सत्यो भवेदा-
हृत्याश्रयतां सर्वेषां मिथ्या भवेद्बहिरेवाश्रयतां सर्वेषां
केदारे यत्र मत्स्यविशेषा उच्चलंति तत्र श्रीकृष्णपुरे
गुरुहृदये निवेशयतां सन्निहित एव । ९ । १० । ७ ।
सन्निहितो भवेत्स्वचरणसमाश्रितानां सर्वेषां व्याधिश्च
न स्पृशेज्जन्म निवर्त्य नियमयेन्मणिस्वर्णविरचितप्राका-
रपरिवृतश्रीकृष्णपुरे प्रणमत प्रत्यहं परमेष्ठिपादम् । ९ ।
१० । ८ । पादे प्रत्यहं सेव्यमाने निवर्त्तेत दुःखम्
अवद्यं न स्पृशेन्मम त्वितः परं का न्यूनता वेदजिह्वाद्रिय-
माणश्रीकृष्णपुर आदिमाश्रितानां दुःखं नास्ति । ९ ।
१० । ९ । नास्ति दुःखम्मम त्वितःपरं का वा न्यूनता
कमलांगनासादरवासस्थानश्रीवक्षस्कस्य शिलाविनि-
र्मितप्राकारपरिवृतश्रीकृष्णपुरेऽभिहिते सर्वकालं दुःखं
पार्श्वे नाश्रयेत । ९ । १० । १० । अस्वनिकटाश्रयणं
पापानां संगनिवृत्तिमपेक्षमाणा गृहदेर्ध्यवत्कुरुकापुरी-
शठकोपोक्ते गानरूपद्राविडसहस्र एतद्दशकं गीत्वा
नर्त्तित्वा प्रणमत तस्य चरणौ । ९ । १० । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

प्राप्तिप्रदानसमयोऽयमिति प्रकाश्य
स्वस्य प्रियं महति कृष्णपुरे वसन्तम् ।
ईशं यथाशकनमाश्रयतेति हर्षा-
दन्योपदेशमकरोद्दशमे मुनीन्द्रः ॥ ९० ॥



सर्वश्रेष्ठ्यात्स्वकीयैरपि च जगदवनाद्दण्डषण्डाधिपत्या-
न्नीलाया वल्लभत्वादमृतवितरणाद्भक्तसुस्निग्धभावात् ।
दासानां सत्यभावादतिसुजनतयार्थो जगत्कारणत्वा-
च्छ्रीमान्वेलाप्रतीक्षो भवभयहरणे चैत्यभाणीच्छठारिः ॥ १०२ ॥
इत्थं सर्वैकबन्धुं चिरकृतकरुणं शीलसिन्धुं पतित्वा-
त्सम्बन्धाद्रक्षितारं स्वगुणगरिमसंस्मारकं प्राह कृष्णम् ।
विस्मर्तुं चाप्यशक्यं घटकमुखसुविस्रंभणीयं सुमत्या
लक्ष्याश्लिष्टं स्वसिध्युन्मुखसमयमनेहःप्रतीक्षं सुमित्रम् ॥ १०३ ॥

इति श्रीसहस्रगीतौ नवमशतकं समाप्तम् ।

---

# अथ दशमशतके
# प्रथमं सनालतामरसदशकम् ।



सनालतामरसतटाकालंकारकेदारतिरुमोहूरि नित्य-
मादरं कृत्वा सम्यक्प्रीत्या वर्त्तमानासुरनिरासकभुजच-
तुष्टयवंतं वक्रकेशं कमलनयनं स्निग्धाधरं कालमेघं
विनाऽन्ययैकया शून्याः स्मो गत्या । १० । १ । १ ।
शून्याः स्मो गत्याऽन्ययैकया सर्वजन्मस्वपि मधुरशी-
तलतुलस्यलंकारमालस्य सहस्रनामवतः स्वामिनः
सामीचीन्यशालिचतुर्वेदीवृद्धिस्थाने तिरुमोहूरि समी-
चीनचरणकटकस्य तस्य चरणच्छायातटाकमंतरेण
वयम् । १० । १ । २ । विना वयमेकशरणस्था न

शून्या इत्येवमाक्रुश्य स्थित्वा चतुर्मुखहराभ्यां देवेष्वन्वेषमाणेषु जित्वा त्रींल्लोकान्रक्षित्वा संचरतस्तिरुमोहूरं सम्यग्वयमितःपरमुपसर्पामोऽस्माकं दुःखनाशाय । १० । १ । ३ । दुःखनाशायाऽस्मानागत्य रक्षेत्येवं स्तुत्वा प्रभाशालिज्योतिर्देवेषु मुनिषु चाऽनुवर्त्तमानेषु वैशाल्यशालिनागशयनशायिनस्तिरुमोहूरि दुःखनाशाय चरणौ स्तुमो भक्ता आगच्छत । १० । १ ।४। भक्ता आगच्छतास्मत्प्रभावज्योतिष एकाद्वितीयकारणस्यांडे त्रिलोकीं मितवत आभरणे तिरुमोहूरि अष्टासु दिशासु मधुरेक्षुभिः सह महानीवाराणां वृद्धये स्वीकृतं मंदिरं परिक्रम्यात्र करवाम नृत्यम् । १० । १ । ५ । नर्त्तकस्य गोपालस्य भीमाचाराणां प्रबलासुराणां मृत्योः स्तुवतामस्माकममराणां मुनीनां च प्रियस्य समृद्धशीतलजलप्रदेशसमृद्धिकेदारपरिवृततिरुमोहूर्याप्तस्य तामरसचरणौ विनाऽन्येन शून्याः स्म शरणेन । १० । १ । ६ । अन्येन शून्याः स्मः शरणेन विपुलमहाप्रकृत्येकप्रभृति परतो जलं सृष्ट्वा तन्मार्गेण प्राचीनमुनिप्रभृतीन्सर्वान्देवैः सह लोकान् कुर्वतस्तिरुमोहूरं परितोऽस्मासु प्रदक्षिणं कुर्वाणेष्वस्माकं दुःखं निवर्त्तेत त्वरितम् । १० । १ । ७ । दुःखं निवर्तेत त्वरितमुपगम्यागत्य दासाः प्रणमतोन्नत्यशाल्युद्यानच्छविमत्तटाकालंकारकांतिमत्तिरुमोहूरि नामसहस्रवत्प्रबलराक्ष-



सानां प्रविश्य मज्जनस्थानं दशरथप्रसूतमरकतमणितटाकमेव । १० । १ । ८ । मणितटाकचरणस्य विकस्वरनयनस्य प्रवालरक्ताधरस्यालंकारशालिचतुर्दीर्घभुजस्य देवस्यासुराणां सदा च्छेदने महासमर्थस्य नित्यवासस्थानभूतोद्यानतिरुमोहूरं सन्निहितमस्माकं समीचीनशरणं वयं प्राप्ताः स्मः । १० । १ । ९ । अस्मदाश्रितं समीचीनं शरणमस्माकमिति समीचीनामराः क्लेशदेभ्यः प्रबलासुरेभ्यो भीता गत्वाऽऽश्रयेयुश्चेत्कामरूपं गृहीत्वा वृद्धिं प्राप्य रक्षतस्तिरुमोहूरो नामैवाभ्यस्य चिंतयत स्तुतास्मदीयाः । १० । १ । १० । स्तुताऽस्मदीया इति स्वयं कुंभनर्त्तनं कुर्वंतं नर्त्तकं कुरुकापुरीशठकोपस्यांतरंगकैंकर्येष्वनुरूपसहस्र एतदुदारतिरुमोहूरः समर्पितं दशकमिदं स्तोतुं शक्तानां दुःखं निवर्त्तेत । १० । १ । ११ । श्रीदिव्यसूरिचरणावेव शरणम् ।

आद्येऽतिमस्य शतकस्य मुनिस्स्वयात्रां
निश्चित्य वर्त्मनि सहायमपेक्षमाणः ।
आप्तं हितज्ञमहितच्छिदमंबुजाक्षं
मोहूरधीशमुरवैरिणमाश्रयत्सः ॥ ९१ ॥

दैत्यानां नाशकत्वाद्विधृततुलसिकामौलिभावान्नयित्वा-
त्सर्पाधीशे शयत्वान्निरवधिकपरज्योतिरुल्लास्यभावात् ।
लोकानां सद्भावाद्दशरथसुतताभ्रान्तिहारित्वमुख्यै-
राकारैः सद्गतिस्स्याज्जलदतनुरसावित्यैति तेनाभ्यधायि ॥ १०४ ॥

---

# द्वितीयं नश्येयुर्दुःखभूतानि दशकम् ।

नश्येयुर्दुःखभूतानि सर्वाणि केशवेत्युक्तौ प्रतिदिनं
क्रूरकर्मकारिणो मृत्योर्भृत्याश्च समीपागमनाय न श-
क्नुयुर्विषवदुरगशयनादरवतो भृंगघोषवत्तटाकवत्केदा-
रानंतपुरं नगरं प्रविशताद्यैव । १० । २ । १ । अद्य
गत्वा प्रविशथ चेत्सप्तजन्मस्वप्यवद्यं न स्पृशेत् पर्व-
तसदृशगेहसमीपे कुरुंदतरुसहितनिबिडपुन्नागयुक्तच-
त्वरविस्फार्युद्यानानंतपुरनगरमायिनो नामैकमेकसहस्रं
स्यादनुसंदधतामुपरितनानां ग्राम एव । १० । २ । २ ।
संचारयति पक्षिणं ध्वजश्च स एव लोकं सर्वं भुक्त्वोद्गी-
र्णवतो वासस्थानं शीतलमनंतपुरं व्यवसायवंतः
प्रविशथ चेत् निवर्त्तेरन् व्याधिः कर्माणि च सर्वाणि
दृढं वयं सुग्रहमवोचामो नाम्नामेकसहस्र एकं यूयं वदत
। १० । २ । ३ । वदत संकोचं विहाय महाजलसा-
गरपरिवृतपरिमलैकविस्फार्युद्यानकेदारालंकारानंतपुरे
प्रीतिं कृत्वा नित्यं वसतो मार्गेण पुष्पाणि समर्प्य पूजां
कुर्वाणानां कृतपुण्यप्रकारवत्त्वम् । १० । २ । ४ ।
पुण्यं कृत्वा समीचीनजलेन पुष्पाणि समर्प्यानुसंद-
धत पितुर्नामैतज्जन्म नाशयेदनंतरं दृढं वयं सुग्रहम-
वोचाम निबिडोद्यानानंतपुरे स्वामिनः कमलपादमुप-



गच्छंतोऽमरा भवेयुः । १० । २ । ५ । अमरा भूत्वा
संचरतामादेर्वासस्थानेऽनंतपुरेऽमरनायकोप्यर्चयति
त्वांतरंगकार्य्याणि कुर्युर्दिविषदोऽस्मदीया उच्यमानं
शृणुत वयमपि गत्वोपगच्छेम कुमारस्य पितुर्दुःखं
निवर्त्तितवंतं गोविंदम् । १० । २ । ६ । निवर्त्तितवा-
न्गोविंद एव लोकं जीवान् देवानन्यांश्च सृष्टवानस्म-
त्परममूर्त्तिरुरगशयने निद्राणश्चलद्वार्युच्चलन्मत्स्यवि-
शेषकेदारालंकारानंतपुरस्य बहिः प्रदेशसंमार्जने लब्धे
क्रूरकर्मनिवर्त्तनं संभवेत् । १० । २ । ७ । क्रूरकर्म-
निवर्त्तनं संभवेत्कामोत्पादकेन यूना स्थानत्वेन स्वी-
कृतमिति वदंति सौंदर्यालंकारानंतपुरे फणावत्युरग-
शयने सक्तस्य चरणौ द्रष्टुं गच्छताऽस्मदीया वर्त्तमाना
वयं युष्माकं सुग्रहमवोचाम । १० । २ । ८ । अस्मा-
भिर्युष्माकं सुग्रहमुक्ता दिवसा अपि संनिहिता जाताः
क्षेमेण समीचीनेन युक्तं पश्यत निबिडोद्यानानंतपुरं
धूमसमीचीनसुगंधिकुसुमानि निर्दोषं विविच्यादाय
वामनचरणयोरेवेति स्तुतौ कृतायां क्षीणानि नश्येयुः
कर्माणि स्वयमेव । १० । २ । ९ । क्षीणानि नश्येयुः
कर्माणि स्वयमेव माधवेत्युक्तौ प्रतिदिनं सदृशस्वर्णप्रा-
कारानंतपुरनगरे पितुरिति चंदनेन सह दीपधूपतामर-
सकुसुमानि सम्यग्विशोध्यादाय स्तोतुं शक्ता अंतश्च-

न्यकीर्तय एव । १० । २ । १० । अंतशून्यकीर्त्यनंतपुर-नगरादिनो गुच्छविकस्वरोद्यानकुरुकापुरीमारेणोक्ते हस्ते पंचभिः सह पंचसु सक्ता आश्लिष्येयुर्गत्वा अमरंलोके स्पृहणीयहस्ताभरणानामप्सरसां वंशसदृशभुज-युगलम् । १० । २ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

वैकुण्ठमेत्य करणीयमशेषदास्य-
मत्रैव केवलमनन्तपुरे विधित्सन् ।
प्राप्यत्वमस्य दुरितौघनिवर्तनं च
प्राचीशकत्तनुभृतां शठजिद्द्वितीये ॥ ८२ ॥

ऊचे श्रीकेशवत्वाद्भुतचरितखगाधीशकेतुत्वयोगा-
दासन्नत्वात्पतित्वादमरपरिषदामादिभूतत्वभूम्ना ।
व्यापारैः सृष्टिमुख्यैरपि च भुजगशायित्वमुख्यैश्चरित्रै-
रध्वक्लेशापहर्ता भवति च भगवानित्यनन्यः शठारिः ॥१०५॥

---

## तृतीयं वंशसदृशभुजयुगलं दशकम् ।

वंशसदृशभुजयुगलं कृश्यति हा कार्श्यं ममासहायतां च किमपि न पश्यति उद्यानसक्ताः कोकिलाश्च कूजंति हा संवीभूता मयूरास्ते मिलित्वा भ्रमंति हा गवां सन्निहितसमुदायसंवाश्चारयितुं त्वयि गते एको-दिवसः सहस्रकल्पो हा तामरसनयनाभ्यां बाधसे हा दया नास्ति दयाशून्यस्त्वं कृष्ण । १० । ३ । १



दया नास्ति दयाशून्यस्त्वं कृष्ण विशालस्तनयोः प्रति संश्लेषं संश्लेषस्यानंतर्भूतः सुखसागर आकाश-मतीत्य ज्ञानं मज्जयित्वा व्याप्य स्वप्नसदृशो निवृत्त-स्तत्रांतः प्राणस्य स्थाने सर्वत्रांतःप्रविष्टः प्राणस्य भरो न भवत्यभिनिवेशो हंतोपर्युपरितः परं तव विश्लेषं न प्राप्नुमो माभूत्तव गोसमूहचारणार्थं गमनम् । १० । ३ । २ । मा भवेयं तव गोसमूहचारणार्थे गमनम् उष्ण-निश्वासं कृत्वा मम प्राणो दह्यते हा यावंतोपि सहाया न भवंत्यहं स्थित्वा तवांजनविग्रहनृत्यं न पश्यामि गच्छेत्कदैको दिवसस्त्वयि निर्गते युध्यन्मत्स्यनयनयु-गलजलं च न तिष्ठति मरणं स्यादेतद्गोपकुले गोप्यो भूत्वोत्पन्नानामेतन्नैच्यवतीनामिदमसहायत्वमेव । १० । ३ । ३ । सहायानामस्माकमसहायनैच्यवतीविश्लि-ष्टानां दुःखमपि न स्मरसि गोविंद त्वद्गोष्ठांतर्गता गा एवादृत्य विश्लिष्याऽस्मांस्त्यक्त्वा ताश्चारयितुं गच्छसि परिपक्वसमीचीनाऽमृतरसप्रवाहः पापिष्ठाया मम प्रति-मनोवकाशमंतःप्रविश्य मज्जयति तव रक्तफलाधरक-पटनीचभाषणस्य प्रत्यनुसंधानं प्राणो दह्यते हा । १० । ३ । ४ । नीचभाषणानुसंधानेषु सर्वेषु प्राणो दह्यते हा दिवसे गोसमूहं चारयितुं गतवान् कृष्णो बंधविनिर्मु-क्तमल्लिकोत्तगनिलो वाति महामदसंध्याचाऽऽगता हा-

मण्यधिकवक्षसि यूथिकामालया मम सुंदरकुचौ
परिमलितौ कृत्वा त्वद्वागमृतं दत्त्वा सौंदर्याधिकता-
मरसकरं हंत दासीनां मस्तकस्योपरि योजय । १० ।
३ । ५ । दासीनां मस्तकस्योपरि त्वं योजय सागर-
सुंदरनयन तवालंकारपादम् अवलंब्य तं मध्ये तव सी-
मंतिन्यो बह्व्यस्तत्तिष्ठत्वस्मत्स्त्रीत्वं न सहामहे तीक्ष्ण-
दीर्घनयनयुगले जलमपि न विरमति मनोपि न तिष्ठ-
त्यस्माकं तस्माद्धेतोर्विदारणं तव गोसमूहचारणार्थगमनं
दह्यतेऽस्मत्प्राणोऽग्निसन्निहितमधूच्छिष्टसदृशः । १० ।
३ । ६ । दह्यतेऽस्मत्प्राणोऽग्निसन्निहितमधूच्छिष्टसदृशो
धवलवलयमेखलाश्च यथा विस्रस्ताः पतेयुः पवित्रकुसुम-
नयनयुगलान्मुक्ता यथा पतेयुः सदृशकुचौ विवर्णौ जातौ
मम भुजौ यथाम्लायेतां महामणिवर्ण त्वद्रक्तकमलवर्ण-
मृदुकुसुमचरणौ यथा क्लिश्येतां त्वं गत्वा गोषु हृष्टः
प्रीत्या ताश्चारयसि तदा त्वयाऽसुरेषु युद्धोद्युक्तेषु किं वा
स्यात्तत्र । १० । ३ । ७ । असुरेषु युद्धोद्युक्तेषु किं
वा स्यात्तत्रेति मज्जति मम पूर्णप्राणो गवां पृष्ठतो मा
गच्छ प्रेम चाभिनिवेशश्चांतर्मिश्रसंश्लेषश्च बाधंते मम
करं मा त्यज वशित्वकृत्तामरसनयने अधरं हस्तौ
पीतांबरं च प्रदर्श्य शैथिल्यावहसूक्ष्मावलग्नबालगोपी-
भिस्तव प्रियाभिः समीचीनाभिः सह संचर । १० । ३ ।
८ । तव प्रियाभिः समीचीनाभिः संचारकरणेन तव



श्रीहृदयदुःखनिवृत्तिसमयेषु सर्वदा वयमत्यानंदं प्राप्नु-
मोऽस्मदीयं स्त्रीत्वं न सहामहेऽस्मत्स्वामिन् गाश्चारयितुं
मागच्छेति बह्वसुरा अभिमतरूपं स्वीकृत्य स्थित्वा
संचरेयुः कंसप्रेरिता आक्रांताश्चेत्तेषां तव च तत्रावद्या-
न्युत्पद्येरन्मम वचः स्वीकुरु हंत । १० । ३ । ९ ।
अवद्यान्युत्पद्येरन्मम वचः स्वीकुरु हंताऽसुराः प्रबल-
हस्ताः कंसप्रेरितास्तपस्विनः क्षुभिताः संचरेयुरसहा-
यत्वं महत्तव रामेन प्रीतिमान्सह न संचरसीत्येव-
मंतरेव मत्प्राणो दह्यते दिवापि गोसमूहचारणं प्रीणासि
रक्तफलाधरास्मद्गोपदेव । १० । ३ । १० । रक्तफला-
धरस्यास्मद्गोपदेवस्य तत्स्वामिनः श्रीचरणयोरु-
परि ताम्रपर्णीशंखाश्रितघट्टेन सुंदरकुरुकापुर्युदारशठ-
कोपेनोक्ते सहस्रे युवतिभिर्गोपीभिरनुसंहिता मालानेन
सह विश्लेषाद्भीताया स्त्रिया तत्र तस्य गोसमू-
हचारणं निवर्त्तयितुं युक्तमेतदपि दशकं तदवलंब-
नम् । १० । ३ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

गोपीनियुक्तमपि गोचपलं वियुक्तं
दास्यन्तमप्यचिरमेव हरिं निजेष्टम् ।
स्वापेक्षकं तमतिशङ्क्य मुनिः स तेन
विस्रम्भितो विपुलतृष्णतया तृतीये ॥ ९३ ॥

अम्भोजाक्षत्वकीर्त्या यदुकुलजतया चात्मनः श्यामलत्वा-
द्गोविन्दत्वात्प्रियोद्यद्वचनपरतया चक्रराजायुधत्वात् ।
श्रीनीलाश्मप्रभत्वादतिसुभगतया गोपनिर्वाहकत्वा-
दस्थानस्नेहशङ्कास्पदरस उदितः श्रीपतिः कारिजेन ॥ १०६ ॥

---

## चतुर्थमवलंबनमेव दशकम् ।

अवलंबनमेव तपोमार्गस्य दामोदरस्य चरणौ कालमेघवर्णस्य कमलनयनस्य जलाकाशभूम्यग्निवायवो भूत्वा स्थितस्य चक्रिणो नामभिर्दिविषद्भिः प्रलप्यमानैर्वैभववतः । १० । ४ । १ । वैभववानाकाशेऽनिमिषाणामपि दर्शनस्याशक्यश्चित्ते आलिंगनमकुर्वतां सदा लक्ष्म्या देहेऽधिष्ठितो रक्तनयनः स्वामी सर्वदा द्विविधकर्माणि विनाश्यात्र मां नियमयति । १० । ४ । २ । नियमयति चक्री केन वा न्यूनतावंतो वयं निवृत्तिर्नास्ति जन्मदुःखमनाशयाम कांतिमन्मत्स्यसुंदरनयनाया मुग्धनीलाया वल्लभस्य चरणाववलोक्य मम शिरसि धृतवानस्मि ।१०। ४ । ३ । शिरसि धृतवानस्मि चरणौ वटस्य पत्रे शयितवतोऽनिमिषेषु प्रणमत्सु पर्वतोपरि स्वयं स्थित्वा मन्मनस्युपविष्टस्य स्थितिनिवृत्तिदुःशकतां निश्चित्यातिष्ठम् । १० । ४ । ४ ।



निश्चित्यातिष्ठं मन्मनसस्त्यागाभावं करे चक्रधरः स्वामी कपटेन महता युक्तोऽश्लाघनीयोऽन्यैस्सत्य इवासत्ये समर्थोऽभिलषणीयोऽस्माकं नागशयनः । १० । ४ । ५ । नागशयनस्य प्रतिदिनं ज्ञानेन हृदये संश्लिष्यतां कृपां कुर्वाणस्य स्वामिनो महाखस्थबालचंद्राश्रितजटं भागे स्थापितवतः पादमाश्रितोस्मि । १० । ४ । ६ । आश्रय चेतः प्रतिदिनं परमपरमपरं व्याधिः कोपि न स्पृशेज्जन्म विनाश्य नियमयेन्मणिस्थिरज्योतिर्मधुसूदनो मत्स्वामी आभरणरूपावस्थितरक्तस्वर्णहिंसकचक्रवान् । १० । ४ । ७ । चक्रिणोऽगाधामराणां परस्य प्रलयवतः कालं सृष्टवतो गोसमूहं चारितवतो बलवता सुंदरेण भुजेन पर्वतमुद्धृतवतश्चरणौ मंगलं मन्मनोऽविस्मृत्य वर्द्धस्व पश्य । १० । ४ । ८ । अपश्यं कमलकुसुमपादं दर्शनसमय एव नशित्वैव निवृत्तानि पापभूतानि सर्वाणि भक्तिमेव कृत्वा सर्वदा नत्वा मार्गेण गमनार्थं पूर्वमेव परमेणोक्तोक्तिप्रकारेण ।१०।४।९। प्रकारेण मनः स्थिरं कृत्वा माधवं प्रतिदिनं धूपेन दीपेन नव्यकुसुमेन नीरेण प्रतिदिशममराणामागत्याश्रयणाय स्थितस्वभावस्य चरणौ दासानामेकमवलंबनम् । १० । ४ । १० । आश्रय इत्याश्रित्य परमपरमपरं मल्ले दृढभुजं व्यामोहवंतं वलुदिवल्देशवतो वाक्यं

सन्दर्भेतादावेकस्मिन् सहस्र एतद्दशकमभ्यस्तवतामे-
कावलंबनं भवेत्कृष्णस्य चरणयुगलम् । १० । ४ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

आसक्तिनिश्चययुतः स्वफलागमस्य
स्वार्थात्परार्थपरधीरनुकंपया सः ।
उज्जीवनाय जगतामुपदिष्टपूर्वां
भक्तिं हरौ फलयुतां निजगाद तुर्ये ॥ ९४ ॥

श्रीमद्दामोदरत्वादमरपरिषदामप्यगम्यत्वभूम्ना
चक्राधीशायुधत्वाद्वटदलशयनान्नागराजे शयत्वात् ।
पक्षस्पर्शोन्मुखत्वात्परपुरुषतामाधवत्वादियोगा-
दुष्प्रापोयं भजद्भिः सुगम इति दृढं माधवं सोभ्यधत्त ॥ १०७॥

---

## पञ्चमं कृष्णस्य चरणयुगलस्यदशकम् ।

कृष्णस्य चरणयुगलस्योपागमनाऽनुकूलमनसोऽ-
नुसंधेयं श्रीनाम दृढं नारायण एव । १० । ५ । १ ।
नारायणो मत्स्वामी भूमिदेवीवल्लभो वारणहंता कारणं
स्वयमेव । १० । ५ । २ । स्वयमेव लोकः सर्वः स्वयमे-
वोत्पाद्योद्धृत्य स्वयमेव भुक्त्वोद्गीर्य स्वयमेव नियमयति
। १० । ५ । ३ । नियंतुः सागरजले बलवदास्यवदुर-
गशयनस्य चरणमुखे पुष्पाणि समर्प्याऽहर्मुखे मृग-
यत । १० । ५ । ४ । मृगयत प्रतिदिनमम्लानकुसुमा-



न्यादाय गायत तस्य नाम पदलाभः स्यात् । १०
५ । ५ । सादरं वसति वेंकटेऽतसीकुसुमवर्णः पिशाची-
पूर्णस्तनभुगास्यो माधवः । १० । ५ । ६ । माधव
इत्येवमुच्चारणे शक्ताश्चेद्दोष एकोपि नोपगच्छेद्-
वयं न स्पृशेत् । ५ । १० । ७ । न स्पृशेयुरवद्यानि
जलपूर्णमेघवर्णस्य नाम ये पठंति ये केचनामरा एव ।
१० । ५ । ८ । अमराणां दुर्लभं स्वीयानां सुलभं
सम्यक् प्रणमतां न तिष्ठेयुः पापानि । १० । ५ । ९ ।
पापप्रबलतमांसीति मुख्यानि भीतानि गच्छेयुः सरो-
जसमीचीनकुसुमानि समर्प्यानुसंदधत महांतम् । १० ।
५ । १० । महतः कृपाधारणस्वभावस्य शठकोपस्य
वाक्सहस्र एतद्दशकं दासानां कृपालाभ एव । १० । ५ । ११ ।

श्रीदिव्यसूरिचरणवेव शरणम् ।

कृष्णस्य पादयुगलं प्रतिभावनीयं
जिज्ञासितं जगति भक्तिसमुत्सुकानाम् ।
प्राप्तौ त्वरातिशयवान्मितसूक्तिजाले-
र्भक्तेः शरीरमपि पंचमतो जगाद ॥ ९५ ॥

नाम्नां संकीर्तनेन स्वपरिवृढतया भावनातोवुवेल-
सस्मृत्या पुष्पदानाध्ययनविवचनैः स्तोत्रनृत्तादिकृत्यैः ।
धर्मैर्वर्णाश्रमोक्तैर्बहुविधभजनप्रक्रियो दीर्घबंधुः
श्रीमान्नारायणश्चेत्यकथयदखिलद्वामिदब्रह्मदर्शी ॥ १०८ ॥

---

# षष्ठं कृपापात्राणां दासानां दशकम् ।

कृपापात्राणां दासानां स्वदासस्य मम चक्री कृपां दातुमुद्युक्तो जातस्तदस्माकं विधिप्रकारेण तमःप्रदमहाभूम्यामितः परं जन्माहं न वाञ्छामि अज्ञानं त्यज त्वं मुग्धमनो वाट्टारुस्वामिनश्चरणौ प्रणम । १० । ६ । १ । वाट्टारुस्वामिनश्चरणौ प्रणम्य महाभूमौ जन्म निराचिकीर्षोरश्रृणोर्मुग्धमनः केशवमस्मत्स्वामिनं गीतिभूतानि वहूनि गीत्वा प्राचीनपापानि ससंबंधानि च्छित्त्वा लौकिकैः सह सहवासं त्यक्त्वा नारायणं प्राप्ताः स्मः । १० । ६ । २ । प्राप्ताः स्मः नारायणं नामानि वहून्युक्त्वा भूलोके संपदधिकवाट्टारुस्वाम्याऽऽगत्याद्याऽऽकाशलोकं दास्यंस्त्वरते विधिप्रकारेण चिंतितप्रकारेण न भवेयुरेतानि कर्माणि मन्मनः । १० । ६ । ३ । मन्मनस्यंतः स्थित्वात्र महाद्रविडशास्त्रमिदमुक्त्वा कठिनहृदयहिरण्यवक्षोभेदी वाट्टारुस्वामी राजभयप्रदे भारते पांडवार्थमायुधं स्पृष्टवान् समीचीनमनोऽस्मत्स्वाम्यस्माकं कृपां स्वयं कुर्यात् । १० । ६ । ४ । आकाशारोहणाय मार्गं दत्तवता वाट्टारुस्वामिनोक्तप्रकारेणाहमारोहणं लभे नरकं हसतात्मनो मध्वधिककुसुमतुलसीपरिमलितपादस्य सुंदरपक्षिणं



स्वयमारुह्य संचतश्चरणौ मम शिरस्येव । १० । ६ । ५ । शिरस्थचरणयुगलस्तामरसनयनो मत्स्वामी स्थितिं न जहाति मन्मनसि सर्वदाऽस्मत्स्वामी गिरिगृह उरगशयनस्योपरि वाट्टारुस्वामिनो मदाधिकहिंसकगजस्य दंतं भग्नवतः शब्दायमानचरणावुपगताः स्मः । १० । ६ । ६ । शब्दायमानचरणावुपगताः स्मोऽस्मद्गोविंदो गृहं स्वीकृतवान् भंगसंघवत्सागरपरिवृतदक्षिणदेशतिलकसदृशगिरिसंघमणिगेहवाट्टारुस्वामिनः कुसुमचरणयोरुपरि परिमलसमूहवत्सुगंधितुलसीदेहे स्थित्वा परिमलयति ।१०।६।७। देहे स्थित्वा परिमलयंत्यास्तुलस्याः परिमलाधिकशिरसो हस्तस्थितचक्रस्याभिप्रेतस्थले युद्धं कृत्वा जलधिनीलवदवस्थितपर्वतसदृशश्रीविग्रहवतो वाट्टारुस्वामिनः किं समीचीनं कृतवानस्मीति मन्मनस्युज्ज्वलो भवति । १० । ६ । ८ । उज्ज्वलश्रीवक्षसि श्रीदेव्या सह प्रकाशमानश्रीवल्लभस्य नित्यवासस्थाने शीतलवाट्टारि श्लाघ्यमानं पक्षिणं संचार्य युद्धवद्राक्षसानां कुलं नाशितवान् अनादरं विना मन्मनः सर्वदा न जहाति ।१०।६।९। विच्छेदमंतरा दास्यं कुर्विंति जन्म च्छित्त्वा दास्यमत्यंतं स्वीकृतवान्हरिर्भूत्वा हिरण्यस्य शरीरं विदारिवांस्तदा महतां दास्यो श्रिते दुष्प्रापं फलं लभेतेति प्रकारं रेखाकांतिमन्मुखोरगशयनस्योपरि

वाट्टारुस्वामी प्रादर्शयत् । १० । ६ । १० । प्रदर्श्य स्वशब्दायमानचरणौ कठिननरकप्रवेशं निवर्त्तितवंतं वाट्टारुस्वामिनं सुंदरकुरुकापुरीशठकोपस्य गीतीभू-तद्द्रविडमालासहस्र एतद्दशकं श्रुत्वा न तृप्येयुर्दिविपदः श्रवणमधुरर्जुवाक्यमेव । १० । ६ । ११ ।

श्रीदिव्यसूरिचरणावेव शरणम् ।

वैकुण्ठधामनि विवेशयिषुं स्वमीशं
तत्र स्वकीयविधिनैव विधातुकामम् ।
पश्यन्मुनिः प्रमुदितोनुबभूव षष्ठे
वाञ्छादिकाः स्वविषयोपकृतिस्तदीयाः ॥ ९६ ॥

चक्रित्वात्केशवत्वादिभिरपि च तथा श्रीशनारायणत्वा-
त्स्नेहित्वात्पाण्डवानामभिमततुलसीपूजनीयत्वभावात् ।
अम्भोजाक्षत्वगोविन्दत उत सुयशश्श्रीपतित्वादिभावैः
श्रीमांस्तीव्रोयमोयं स्वपदवितरणे चेति तेनाभ्यधायि ॥१०९॥

---

## सप्तममृजुवचसः कवयो दशकम् ।

ऋजुवचसः कवयः प्राणं रक्षंतो दास्यं कुरुत तिरु-मालिरुंजोलै वंचकश्चौरो महामायी मायाकाव्यवान् भूत्वाऽऽगत्य मम मनसि प्राणे चांतर्मिलित्वा स्थितैर-विदितप्रकारं मन्मनः प्राणं च तद्भुक्त्वा स्वयमेव भूत्वा पूर्णो जातः । १० । ७ । १ । स्वयमेव भूत्वा पूर्णः सन् सर्वे लोकाः प्राणश्च स्वयमेव भूत्वा स्वयमेवाहमित्युच्य-



मानो भूत्वा स्वं स्वयमेव स्तुत्वा मम मध्वेव क्षीरमिवेक्षु-रस एवामृतमेव तिरुमालिरुंजोलैस्वाम्येव भूत्वा स्थित्वा निर्वृत्तो मां कात्स्न्येन प्राणं भुक्त्वैव । १० । ७ । २ । मां कात्स्न्येन प्राणं भुक्त्वा मम मायाशरीरेऽन्तःप्रविष्टो मम सर्वं स्वयमेव भूत्वा स्थितस्य मायिनः स्वामिनो वासस्थानं दक्षिणदिशि समीचीनतिरुमालिरुंजोलैदिशं प्रत्यंजलिं बध्वोपगतोहमितः परमपि गच्छेयं किं कथं वा स्यात्स्वामिश्रीकृपा । १० । ७ । ३ । कथं वा स्यात्स्वा-मिकृपा लोकाः प्राणाश्च स्वयमेव भूत्वा सम्यङ् मम देहं न त्यजति भूमिमध्ये चरित्वा पादं संयोज्य दक्षिणा-भिरूयदिशस्तिलकभूततया स्थितं तिरुमालिरुंजोलै अस्मत्पर्वतं न त्यजत्यनुपगतानामसुराणां नाशाय । १० । ७ । ४ । अनुपगतानामसुराणां नाशाय समी-चीनामराणां वृद्धिलाभायाऽनुसंधातुमशक्यानतुसंद-धतां समीचीनमुनीनामानंदनिर्भरत्वाय स्वरपूर्णगीति-युक्तमधुरकाव्यान्यहं सन्स्वं स्वयं गीत्वा तेन्ना इति वदति मत्स्वामी तिरुमालिरुंजोलैस्वामी । १० । ७ । ५ । तिरुमालिरुंजोलैवासी भूत्वा सुंदरत्रिलोकीं स्वस्यैक-महोदरे निधाय कल्पेकल्पे प्राधान्येन रक्षन् श्रियः मतिर्मां नियमयन् व्यामोही शिवेन ब्रह्मणा चाद्दष्टो दुर्लभं व्यामोहं प्राप्य चरणौ स्तोतुं कृपां दत्तवान्स्वामी । १० । ७ । ६ । कृपां ददस्व मत्स्वामिन्निति त्रिनय-

नस्वामी वैशद्यशाली ब्रह्मस्वामी देवनायको देवाश्च तमांसि निवर्त्तयंतो मुनयश्च स्तुवंति यं स्वामी श्रीपर्वतोऽज्ञानानां निवर्त्तकः सुन्दरपर्वतस्तिरुमालिरुंजोलेपर्वतः । १० । ७ । ७ । तिरुमालिरुंजोलेपर्वतं च श्रीक्षीरसागरश्च मम शिरश्च श्रीलक्ष्मीव्यामोहवद्वैकुंठं च शीतलश्रीवेंकटं च मम शरीरं च दुस्तरमहामायं मम प्राणं च मनश्च वचश्च कर्म चैकमहाद्भुटचेकदेशमपि न जहाति मम कालादिरेकः । १० । ७ । ८ । कालादिरेक एवेत्युक्त एको लोकं सर्वमपि प्रतिकल्पं स्वस्यांतः-सृष्ट्वा रक्षित्वा संहृत्य संचरतः समुद्रवर्णस्य मत्स्वामिनः सुंदरशीतलतिरुमालिरुंजोलै मंगलं मनो मा त्यज शरीरप्राणयोर्नाशमनुमन्यस्व । १० । ७ । ९ । नाशमनुमन्यस्व तव महामायायास्तिरुमालिरुंजोलैवासिन्नस्मत्स्वामिन्नहमेव त्वं भूत्वा मां रक्षितवन् वर्द्धमानपंचविषयेन्द्रियपंचकर्मेंद्रियपञ्चभूतानामत्रैतत्प्राणासंसृष्टप्रकृतिमहदहंकारमनसाम् । १० । ७ । १० । महदहंकारमनोनाशाय पञ्चानां प्रबलहस्तानां नाशाय स्वयमहंकारो भूत्वा प्रविश्य स्वयं स्वयमेव भूत्वा स्थितं भ्रमराहंकारवदुद्यानकुरुकापुरीशठकोपेनोक्तसहस्रे महदहंकार एतद्दशकं तिरुमालिरुंजोलैपर्वतस्य । १० । ७ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।



अस्मिन्नुपैम्यमुमिति स्वशरीरलोल-
तद्दोषमुग्धमपि तत्यजने स्वयञ्च ।
सार्धं चिकीर्षुरधिगम्य हरिं तदीये
शीले मुनिः स खलु सप्तमतो ममज्ज ॥ ९७ ॥

अत्याश्चर्यस्वभावाद्धृदयगततया स्वस्तुतौ प्रेरकत्वा-
त्स्वामित्वात्सर्वभूतान्तरनुगततया स्वस्तुतौ कर्तृभावात् ।
आपद्बन्धुत्वयोगाद्बहुविधसविधस्थानवत्त्वेन देवः
श्रीमानत्यादरः स्यात्स्वजनपरिकरेष्वित्यथो संजगाद ॥ ९८ ॥

---

## अष्टमं तिरुमालिरुंजोलै दशकम् ।

तिरुमालिरुंजोलै इत्यवदमिति श्रीपतिरागत्य मम मनसि परिपूर्णः प्राविशद्गुरुमहामणिप्रसारिजलकावेरी दक्षिणपार्श्वे श्रीवल्लभस्याऽऽगत्य शयानस्य स्थानं सुन्दरतिरुप्पेरु । १० । ८ । १ । पेरि नित्यं वसत्स्वाम्यद्यागत्य नो तिष्ठामीति मम मनसि पूर्णः प्राविशन्मेवान् सप्त सागरान् सप्त पर्वतान्सप्त लोकान् भुक्त्वाप्य-तृप्तोदरं परिपूर्णमवलंबितवानस्मि । १० । ८ । २ । अवलंबितवाञ्जन्मानाशयं दुःखं न भजामि न्यवर्त्तयं गृहसुखे स्थितिं मायां ध्वजगोपुरगृहपरिवृततिरुप्पेरुस्वामिचरणसमाश्रयणे मम सुलभीभवनप्रकारे । १० । ८ । ३ । सुलभीभवनप्रकार इति मम नयनयोर्हृष्टयोर्हर्षाविष्टचित्तः सन्नानंदवान् भवामि शुकविहारवदुद्यानपरिवृत-

तिरुप्पेरुस्वामी वैशद्यवदुन्नताकाशं दद्यात् । १० । ८ । ४ । आकाशमेव दास्यन् मह्यं मया सह संगरं कृत्वा मांसैकमिश्रेऽस्मिन्नंतः प्रविश्याद्य स्वयमेव व्याकुलतावहकर्माणि निवर्त्तितवान्मधुनिविडोद्यानसुंदरतिरुप्पेरुनगरवान् । १० । ८ । ५ । तिरुप्पेरुनगरवान्तिरुमालिरुंजोलैपर्वते नित्यं वासं कुर्वाण उपकारकोऽद्यागत्य तिष्ठामीति मम मनसि परिपूर्णः प्राविशद्बहुमानमेव प्राप्यामृतं भुक्त्वा हृष्टोऽभवम् । १० । ८ । ६ । भुक्त्वा हर्षं प्राप्तस्य ममोपरि का वा न्यूनतोपरि दास्यहर्षेथान्ते नमोवाचमलभे भृंगहर्षवदुद्यानपरिवृततिरुप्पेरुस्वामी दृष्ट्वा हृष्टो भवितुं नेत्रे स्थित्वा नापयाति । १० । ८ । ७ । नेत्रे स्थित्वा नापयाति मनोरथातिशायी चिंतायां सूक्ष्मपदार्थः सप्तस्वररसः स्वयमेव वर्णेन समीचीनैर्मणिगृहैः परिवृते तिरुप्पेरुवासी दृढं मम मनसि प्राविशन्निविडोद्य । १० । ८ । ८ । अद्य मां पदार्थं कृत्वा स्वमप्यंतःप्रावेशयत्तदा मां बहिर्गमनाय संकल्पितवान् किं चिकीर्षुः पर्वततुल्यभासमानगृहपरिवृततिरुप्पेरुस्वामिनैकस्मिन्मम कृपां कर्तुं विज्ञापनं प्राप्तोस्मि । १० । ८ । ९ । प्राप्तोस्मि प्रीतः सन् दास्यं कुर्वन् तव पादं प्राप्तवानिदमेव पुनरप्यपेक्षितं मन्मातरभ्यस्तवदेदविद्वृद्धिस्थानतिरुप्पेरुवासिनोऽनन्यानां



दासानां दुःखं न तिष्ठेत् । १० । ८ । १० । अतिष्ठद्दुःखदीर्घकेदारपरिवृततिरुप्पेरि समीचीनबहुपुरुषवृद्धिस्थानकुरुकापुरीशठकोपोक्तपूर्णद्रविडसहस्र एतद्दशकमभ्यस्यद्भिर्दासैरीशितव्यं व्याप्तस्वर्णाकाशम् । १० । ८ । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

व्यामोहमात्मनि विलोक्य विभोरवेल-
मत्यादरे मयि कथं त्वमनादरः प्राक् ।
हेतुं वदोचितमिहेत्यनुपृच्छ्य चैनं
दत्तोत्तरो मुनिरनेन न चाप्तमेभूत् ॥ ९८ ॥

लक्ष्मीकान्तत्वयोगाद्द्विपदि सखितया दिव्यदेशस्थितत्वा-
न्मोक्षोद्योगात्तदर्थं कृतशपथतया सर्वतः संनिधानात् ।
दृष्ट्यन्तःसन्निवासादतिवितरणतः स्वस्वभावप्रकाशा-
त्स्वामित्वाच्चुष्पतीत्थं स्वयमनुपथितः श्रीपतिश्चेत्यगायि १११

---

## नवमं व्याप्ताकाशे दशकम् ।



व्याप्ताकाशे समुदायमेघास्तूर्य्यशब्दमकुर्वन् अगाधसमुद्राश्चंचलतरंगकरानुद्धृत्य नृत्यमकुर्वन् सप्तदेशाश्च समीचीनं धरन्मम पितुरानंदावहगुणनारायणस्य दासान्दृष्ट्वा प्रीताः । १० । ९ । १ । नारायणदासान्दृष्ट्वा प्रीत्या समीचीनजलेन मेघाः पूर्णस्वर्णघटाः पूरिता उन्नताकाशे जलवहसागराः स्थित्वा कोलाहलमकुर्वन्

दीर्घपर्वततोरणानि निबिडानि कृत्वा सर्वत्र प्रणेमुर्लोकाः
१० । ९ । २ । प्रणेमुर्लोका धूपं समीचीनकुसुमवर्षमव-
र्षन् भूमिं तदाऽऽक्रांतवतो दासानामग्रे आगच्छतेत्युभ-
योः पार्श्वयोरवदन्मुनयो मार्गोयं वैकुंठगामिनामित्या-
गत्याऽभिमुखम् । १० । ९ । ३ । अग्रेऽग्रेऽनिमिषा
वासस्थानमकल्पयन् भानुमंतस्ते ते करपंक्तिं प्रादर्श-
यन् कंपजनको ध्वनिर्मुरजानां तरंगवत्समुद्रघोषसदृ-
शोभून्मधुविसारितुलसीशिरसो माधवस्य दासानाम् ।
१० । ९ । ४ । माधवस्य दासा इति द्वारे दिविषत्स्वा-
गच्छताऽस्मत्पदे प्रविशतेति वदत्सु गीतान्यगायन् किं
नरा गरुडाश्च वेदसमीचीनमुखा यागफलं मनसा
समर्प्य । १० । ९ । ५ । यागस्य मनसा समर्पणसमये
परिमलप्रसारिसुगंधिधूमं काहलानि शंखाश्च संसृज्य
सर्वत्र घोषितवंतो नियमयताऽऽकाशस्थलं चक्रिणो
दासा इति कांतिमत्सुंदरनयना अंगना मंगलाशासन-
मकुर्वन् प्रीता एव सत्यः । १० । ९ । ६ । अंगनासु
मंगलाशासनं कुर्वाणासु मरुतो वसवश्चाऽनुसृत्य सर्वत्र
स्तोत्रमवदन्नगाधसागरे शयितस्यास्मत्केशवस्य वर्द्धमा-
नकांतिमणिकिरीटस्य कुंभघोणस्थास्मद्गोपालस्य कुल-
दासानाम् । १० । ९ । ७ । कुलदासा एते गोविंदस्येति
किरीटवत्सु दिविषत्सु पर्यायेण पर्यायेणाभिमुखमाग-



च्छत्सु ध्वजालंकृतदीर्घप्राकारगोपुराणां सन्निहितेषु
विग्रहवन्माधववैकुंठप्रवेशसमये । १० । ९ । ८ । वैकुंठ-
प्रवेशसमये द्वारदेशे दिविषदो वैकुंठदासा अस्मदीया
अस्मत्स्थानं प्रविशतेति वैकुंठामरा मुनयश्च विस्मिता
अभवन् वैकुंठप्रवेशो भूमिस्थानां विधिः । १० । ९ । ९ ।
विधिप्रकारेण प्राविशन्निति समीचीनवेदविदः स्थानेषु
सोपचारं चरणौ प्रक्षालितवंतो निधिं समीचीनचूर्ण-
पूर्णकुंभदीपांश्च चन्द्रमुखा मुग्धांगना धृतवत्य आगत्य
। १० । ९ । १० । आगत्य तस्मिन् प्रत्युद्गच्छति महामणि-
मण्डपेऽन्तशून्यमहानंददासैः सह स्थितिं गुच्छविकास्यु-
द्यानकुरुकापुरीशठकोपोक्ते च्छंदसां सहस्र एतदभ्यस्यंतो
मुनयः । १० । ९ । ११ ।

श्रीदिव्यसूरिचरणवेव शरणम् ।

सत्कारमध्वनि सुरैरपि सन्निकृष्टे
प्रत्युद्गतिं परमधाम्नि जनैस्तदीयैः ।
तत्र स्थितिं सुखमयीं च हरिप्रियाणा-
मासादितो मुनिरभून्नवमे शठारिः ॥ ९९ ॥

स्वामित्वाच्छ्रीशनारायण इति यशसा विक्रमाद्विष्टपानां
श्रीमत्त्वाच्चक्रवत्त्वाज्जलनिधिशयनाच्चापि गोविन्दभावात् ।
वैकुण्ठस्वामिभावादपि च निजजनानर्चिरायाख्यगत्या
स्वं लोकं प्रापयेच्छ्रीपतिरिति कथयां श्रीशठारिर्बभूव ॥ १२ ॥

## अष्टमं मुने चतुर्मुख त्रिनयन दशकम् ।

मुने चतुर्मुख त्रिनयन पितर्मंदविद्धफलाधर तामरसनयन नीलमाणिक्य मद्वंचकासहायस्य मम पूर्णप्राण मन्मस्तकस्योपरि भूत्वाऽऽगत्येतः परमहं गमनं न सम्मन्ये कामपि मायां माकार्षीर्मम । १० ।१०।१।
मायां माकार्षीर्मम तव श्रीवक्षोमालया पूर्णया वासनाकरसुन्दरकेशया श्रिया शापितोसि त्वया शापितोसि पश्य स्नेहं कृत्वा त्वया सह मम प्राणभेदं विनैकतया संकोचमकृत्वा स्वीकृतवानसि मामाहूय स्वीकुर्वागत्य हंत ।१०।१०। २ । आहूय स्वीकुर्वागत्य हंत ममाविद्धनीलमाणिक्य प्राणस्यैकामवलंबनशाखां त्वां विना न जानाम्यहमाहत्य प्रणमतां ब्रह्मशिवेंद्रादीनां सर्वेषां नाभिकमलादिकंदोपरितनानां तथाविध । १० । १० ।
१० । ३ । उपरितनसुन्दरशीतलप्राचीनक्षेत्राहो तत्रोपरितनस्त्वमेवाहो आकाशसमीचीनज्योतिस्तत्रांतर्ब्रह्मा हरस्त्वमुपरितनान्यावंति च सृष्टवान्मुनिस्स त्वं मम भरं साधयितुं प्रवृत्तो मां गमनाय त्यक्तवानसि ।
१० । १० । ४ । गमनाय विसृज्य मां त्वं बहिर्गंतुमुद्युक्तश्चेत्पश्चादहं कमवलंब्य किं हंत मदीयमिति वदामि किमहमिति वदामि किं सम्यगयसा पीतजलमिव



मदीयपूर्णप्राणं सम्यक्पातुं ममातृप्तामृतमभूः । १० ।
१० । ५ । ममातृप्तामृतमभूर्मम शरीरं भोग्यप्राणं मस्तृप्ति निविश्य भुक्तवानसीतःपरं भुक्त्वा निर्वृतो भव क्षेत्रातसीवर्ण पुण्डरीकनयन रक्तस्निग्धाधर त्वदनुरूपसुंदरकुसुमांगनायां प्रेमवन्मत्प्रेमाहो । १० । १० । ६ ।
सुंदरकुसुमांगनायां प्रेमवन्मत्प्रेमाहो नीलपर्वतो द्वे चंद्रकले मुखेन गृहीत्वोत्स्थित इव सुंदरवराह एको भूत्वा भूमिं दंष्ट्राग्रे धृतवन्मत्स्वामिन्नीलसमुद्रमार्थिस्त्वां लब्ध्वेतःपरं त्यक्ष्यामि किम् ।१०।१०।७। लब्ध्वेतःपरं त्यक्ष्यामि किं त्वां मदद्वितीयमहाप्राणं संसृष्टद्विविधकर्म भूत्वा प्राणो भूत्वा फलरूपाणि भूत्वा कृत्स्नेतत्रिलोकीमहावनगुहा भूत्वा वनगुहायां प्रविश्य सर्वत्र सूक्ष्मीभूयांतर्हितोसि मत्प्रथमाद्वितीयबीजभूताहो ।
१० । १० । ८ । प्रथमाद्वितीयबीजभूताहो कृत्स्नत्रिलोक्यादीनां सर्वेषां प्रथम द्वितीयं त्वां त्वां कदाऽऽगत्य प्राप्स्याम्यहं प्रथमाद्वितीय तत्रत्यात्रत्यकृत्स्नं व्याप्त वर्द्धनप्राचीनक्षेत्रभूत प्रथमाद्वितीयाभिव्याप्ताष्टदिग्व्याप्ताधोव्याप्तोर्ध्वव्याप्त नाशरहिताहो । १० । १० । ९ ।
अभिव्याप्ताष्टदिग्व्याप्ताधोव्याप्तोर्ध्वव्याप्त नाशरहितमहाप्राचीनक्षेत्राहो अभिव्याप्ततदधिकपरसमीचीनविकस्वरज्योतिरहो अभिव्याप्ततदधिकोज्ज्वलज्ञानानंदाहो

अभिव्याप्ततदधिकमदभिनिवेशनिवृत्त्यंतर्भावितवानसि । १० । १० । १० । अभिनिवेशनिवृत्ती संश्लिष्यंतं हरिमजं हरमाकृश्याभिनिवेशनिवृत्तिं लब्ध्वा मोक्षं प्राप्तवता कुरुकापुरीशठकोपेनोक्तमभिनिवेशरूपांताद्ये- तत्सहस्रेंतिमाभिनिवेशेनान्ताद्येतद्दशकं ज्ञातवंत उत्पन्ना उच्छ्रायवंत एव । १० । १० । ११ ॥

श्रीदिव्यसूरिचरणावेव शरणम् ।

इति श्रीसहस्रगीतौ दशमशतकं समाप्तम् ।

यः श्रीशठारेर्भणितेर्विवृत्तिं मणिप्रवालात्मतया प्रसिद्धाम् ।
गीर्वाणभाषात्मतया चकार तं रंगसूरिं शरणं प्रपद्ये ॥ १ ॥

इतिश्रीसहस्रगीतिः ( तिरुवाय्मोडि ) समाप्ता ।

तद्दर्शनं च मनसैव न चक्षुषेति
भक्त्या युतः परमया भगवाञ्छठारिः ।
पश्चाज्ञया भगवतः परिहृत्य मांद्यं
स्वाभीष्टमच्युतपदं दशमे प्रपेदे ॥ १०० ॥

इति श्रीद्रविडोपनिषत्सङ्गतिः समाप्ता ।

अक्लेशान्तःप्रवेशाज्जलनिधिसुतया सन्निरोद्धव्यभावा-
द्दिव्यश्रीविग्रहत्वादखिलतनुतया तृप्तपीयूषभावात् ।
पश्चाद्बन्धुत्वभूम्युद्धरणकरणतः पुण्यपापेशितृत्वा-
न्मुक्तैर्दातानुभाव्यो हरिरिति शठजिद्दर्शयन्मुक्तिमाप ॥ ११३ ॥

एवं स्वानां गतिं व्यध्वजदुरितहरास्थानशंकाहरागं
सुप्रापं भक्तिभाजां बहुविधभजनप्रक्रियं श्रीशठारिः ।
तीव्रोद्योगं स्वदाने स्वजनतनुकृतास्यादरं प्राह चान्ते
स्वेच्छातुष्टं सुखार्चिर्मुखसरणिमुखं मोक्षदं मुक्तभोग्यम् ॥ ११४ ॥



इत्थं सेव्यं सुभोग्यं शुभसुभगतनुं सर्वभोग्यप्रकृष्टं
श्रेयस्तद्धेतुभूतं प्रपदनसुलभं स्वाश्रितानिष्टजिष्णुम् ।
भक्तच्छन्दानुरक्तं निरुपधिसुहृदं सत्पदव्यां सहायं
श्रीशं प्राप्य स्वसिद्धेः स्वयमिह करणं स्वप्रबन्धे शठारिः ॥ ११५ ॥

आद्ये स्वीयप्रबन्धे शठजिदभिदधे संसृतेर्दुःसहत्वं
द्वैतीयीके स्वरूपाद्यखिलमथ हरेरन्यभूत्स्पष्टदृष्टम् ।
तार्तीयीके स्वकीयां भगवदनुभवे स्फोरयामास तीव्रा-
माशां तुर्ये यथेष्टं भगवदनुभवादाप मुक्तिं शठारिः ॥ ११६ ॥

श्रीमान्सीमातिलंघिस्थिरतरकरुणस्सर्ववित्सर्वशक्तिः
स्वामी सर्वस्य जन्तोस्स्वचरणयुगलस्वीकृतास्माकभारः ।
किं नः कृत्यं स्वहेतोः किमिह न सुलभं का विपत्तिर्भवित्री
कस्यान्यस्याद्यवर्ण्या वयमिति विदुषामाह तुर्यस्त्वमन्त्ये ॥ ११७ ॥

शास्त्रे देहातिरिक्तात्मनि तदधिपतौ तत्प्रसादाद्युपाये
तस्मान्निःश्रेयसाप्तौ तदुपचरणतोऽनन्ततापाभिघाते ।
तद्भक्तानां प्रभावे तदुपसदनतस्स्वान्तकालुष्यशान्तौ
सारं वेद्यं स्ववेदे सकलमकथयत्सानुकम्पश्शठारिः ॥ ११८ ॥

इत्थं सत्सम्प्रदायक्रमसमधिगताशेषवर्णार्हवेदे
श्रद्धाशुद्धाशयानामघटयदनघं कौतुकं वेंकटेशः ।
सम्यक्त्वे तस्य साक्षाच्छठरिपुरथवा सर्वसाक्षी स साक्षी
सावद्यत्वेपि सोढुं प्रभवति भजताम्प्रकम्प्यानुकम्पः ॥ ११९ ॥

शोकः श्लोकत्वमभ्यागत इति वदतः शुद्धबोधार्णवोत्थ-
न्नानाकल्लोलनाथानुभवरसपरीवाहतः श्राव्यवेदात् ।
वेदान्ताचार्यकः श्रीबहुमतबहुविद्वेंकटेशोऽकृतेयं
रम्या तात्पर्यरत्नावलिरनघगुणा रञ्जनी रंगभर्तुः ॥ १२० ॥

इति श्रीद्रविडोपनिषत्तात्पर्यरत्नावलिः समाप्ता ।

---

श्रीमते रामानुजाय नमः ।

श्रीगोदादेव्यै नमः ।

# श्रीव्रतं-( तिरुप्पावै ) ।



नीलातुंगस्तनगिरितटीसुप्तमुद्बोध्य कृष्णं
पारार्थ्यं स्वं श्रुतिशतशिरस्सिद्धमध्यापयन्ती ।
स्वोच्छिष्टायां स्रजि निगलितं या बलात्कृत्य भुंक्ते
गोदा तस्यै नम इदमिदं भूय एवास्तु भूयः ॥ १ ॥

---

मार्गशीर्षो मासः चन्द्रपूर्णसमीचीनो दिवसस्तीर्थावगाहनायागच्छन्त्य आगच्छत समीचीनाभरणाः श्रीसमृद्धगोपव्रजश्रीमद्बालास्तीक्ष्णकुन्तक्रूरकर्मनन्दगोपकुमारः सौन्दर्यपूर्णनयनयशोदाबालसिंहः श्यामदेहो रक्ताक्षः सूर्येण चन्द्रेण च समानमुखवान् नारायण एवास्माकमेव परिकरं दद्याद्भौमा यथा श्लाघेरन्संगम्य भो जानीतास्मच्छन्दः ॥ १ ॥ लोके वर्द्धमाना अस्माभिरप्यस्मद्व्रतस्य कर्त्तव्याः क्रियाः शृणुत क्षीरसमुद्रे निश्चलं निद्राणस्य परमस्य पदं गीत्वा घृतं नाद्मो दुग्धं नाद्मो नित्यं प्रातरवमाद्यांजनमक्ता न लिखामः पुष्पमादाय वयं केशं न बध्नीमो अनाचरितान्न कुर्मः क्रूरोक्तिं गत्वा न वदामो धर्मं भिक्षां च यथाशक्ति हस्तेन



तास्मच्छन्दः ॥ २ ॥ वर्द्धित्वा लोकं क्रान्तवत उत्तमस्य नाम गीत्वा वयमस्मद्व्रतस्योकावगाहामहे चेद्दुर्भिक्षं विना देशे सर्वत्र प्रतिमासं त्रिवर्षा भवेदुदारमहानीवारान्तर्मत्स्या उच्चलेयुः सुन्दरकुवलयपुष्पे रेखावद्भ्रमरा निद्रां कुर्युर्विरतिं विना प्रविश्य स्थित्वा पृथुलस्तनं गृहीत्वा विमोचने कलशं पूरयेयुरुदारमहापशवोऽविनाभूतसंपत्समृद्धं भो जानीतास्मच्छन्दः॥३॥ समुद्रवर्षनेत्रैकं त्वं हस्तं मा गोपय समुद्रान्तः प्रविश्य पूरयित्वा शब्दित्वाऽऽरुह्य कल्पादिभूतस्य विग्रहवद्देहे श्यामतां प्राप्य महासुन्दरभुजस्य पद्मनाभस्य हस्ते चक्रवद्विद्युतं प्रकाश्य दक्षिणावर्त्तशंखवत्स्थिरं गर्जयित्वाऽविलम्ब्यं शार्ङ्गविसृष्टशरवृष्टिवत्सुखाय लोके वृष्टिं कुर्वस्माभिरपि मार्गशीर्षावगाहनाय सन्तुष्य भो जानीतास्मच्छन्दः ॥४॥ मायिनं स्थिरोत्तरमथुराधिपं परिशुद्धमहाजलयमुनाघट्टवन्तं गोपकुले प्रादुर्भूतं दर्शनीयदीपं मातुर्देहकान्तिं कृतवन्तं दामोदरं परिशुद्धा भूत्वागत्य वयं परिशुद्धपुष्पाणि प्रक्षिप्य प्रणम्य मुखेन गीत्वा मनसा चिन्तयामश्चेद्गतोऽपराधः प्रवेशाय स्थितश्चाऽग्नौ तूलं भवेत्कथय भो जानीतास्मच्छन्दः ॥ ५ ॥ पक्षिणश्च कूजन्ति भो पक्षिवाहनमन्दिरे श्वेताह्वानशंखमहारवं नाशृणोः किं बाले समुत्तिष्ठ पिशाचीस्तनविषं

भुक्त्वा कृत्रिमशकटसन्धिबन्धविनाशाय पादौ प्रसार्य प्रवाहे सर्पे निद्रां कुर्वन्तं बीजभूतं हृदये निधाय मुनि- [ योगिभिश्च मन्दमुत्थाय हरिरिति उच्यमानमहारवस्य हृदयप्रवेशने शीतलीभूतं करोति भो जानीतास्मच्छन्दः ॥ ६ ॥ कीशकीशिति सर्वत्र भरद्वाजानां मिलित्वोच्य- मानवचनरवं नाश्शृणोः किं मुग्धांगने मणौ कूर्माभरणे च स्वनति हस्तं निष्कास्य सगन्धपरिमलितकेशगोपी- भिर्मंथानेन शब्दायितदधिरवं नाश्शृणोः किं नायिकांगने नारायणमूर्त्तेः केशवस्य गीतं श्रुत्वा शयितासि किं तेजस्विन्युद्घाटय भो जानीतास्मच्छन्दः ॥ ७ ॥ प्राच्याकाशः श्वेतो महिषा हिमघासं चरितुं व्याप्ता भोऽन्या बाला अपि गन्तुं गच्छन्तीर्गमनं विना प्रतिरुध्य तवाह्वानायागत्य स्थितास्स्म कौतूहलवति सालभञ्जिके समुत्तिष्ठ गीत्वा परिकरमादाय तुरगास्यं विदारितवन्तं मल्लान्संहृतवन्तं देवाधिदेवं गत्वा वयं सेवामहे चेद्दाहेति विचार्यानुकंपेत भो जानीतास्म- च्छन्दः ॥ ८ ॥ शुद्धमणिगृहे समन्तादीपे ज्वलति धूपे परिमलति निद्राशय्यायां निद्राणे मातुलपुत्रि मणि- कवाटयन्त्रमुद्घाटय मातुलानि तामुद्बोधयितुं न शक्नोषि त्वत्सुता मूका किमुत बधिरा किं परवशा किं निरोध- महानिद्रायै मंत्रिता किं महामायी माधवो वैकुण्ठ इत्येवं नामानि सर्वाण्यभ्यस्तानि भो जानीतास्मच्छन्दः ॥ ९ ॥



अनुष्ठाय स्वर्गम्प्रविशन्मातरुत्तरमपि न दद्युः किं कवाटमनुद्घाटयन्त्यः सुगंधितुलसीककिरीटनाराय- णेन अस्माभिः स्तुतेन परिकरन्ददानेन धार्मिकेण पूर्वमेकस्मिन्दिने मृत्योर्मुखे पतितः कुंभकर्णोऽपि परा- जयं प्राप्य तुभ्यमेव महानिद्रामदात्किमतीव व्यामोह- वति दुर्लभाभरणभूते वैशद्येनागत्योद्घाटय भो जानीस्ता- स्मच्छन्दः ॥ १० ॥ बालधेनुगणान्बहून्दुग्ध्वा शत्रूणां बलनाशाय गत्वा युद्धचतां दोषेण केनापि शून्यानां गोपालानां स्वर्णलते वल्मीकसर्पनितंबे स्थलमयूर्यो- गच्छ बन्धुभूतास्सख्यः सर्वाश्चागत्य त्वदीयांगणे प्रविश्य मेघवर्णस्य नाम गायन्ति परिस्पन्दं विना वार्त्तां च विना संपदंगने तव किं निद्राप्रयोजनं भो जानीतास्मच्छन्दः ॥ ११ ॥ उद्धुष्य बालवत्समहिषी- वत्सेऽनुकम्प्य चिन्तयित्वा स्तनमार्गेण स्थित्वा दुग्धं स्रावयन्त्यार्द्रीकृत्य गृहं पंकीकरोति समीचीनश्रीमतो भगिनि वर्षे शिरसि पतति त्वद्द्वारस्तम्भमवष्टभ्य कोपेन दक्षिणलंकानायकं संहृतवतो मनसोभीष्टस्य गानेऽपि त्वं मुखं नोद्घाटयसीतःपरं वोत्तिष्ठायं को वा महास्वापः सर्वगृहस्थाभिर्ज्ञातो भो जानीतास्मच्छन्दः ॥ १२ ॥ पक्षिणो मुखं विदारितवतो दुष्टराक्षसमुद्धृत्योन्मूलित- वतः कीर्तिं गीत्वा गत्वा बालास्सर्वा व्रतस्थलं प्रविष्टाः शुक्र उदितो गुरुरस्तमितः पक्षिणश्च कूजन्ति भो कुसु-

महारिणेक्षणे सुशीतलमवगाह्य स्नानमकृत्वा शय्यायां
शेषे किं सालभंजिके त्वं समीचीनकाले कृत्रिमं विहाय
मिलित्वा भो जानीतास्मच्छन्दः ॥ १३ ॥ युष्माकं
पाश्चात्योद्यानवाप्यां कल्हारमुखं विकसितं कुमुदमुखं
मुकुलितं भो इष्टकचूर्णवस्त्राः श्वेतदन्तं धावितवन्तः
स्वेषां श्रीमन्मन्दिरशंखमर्पयितुं गच्छन्त्यस्मान्प्रथम-
मुद्बोधयितुं मुख्योक्तिमत्पूर्णे उत्तिष्ठ लज्जाहीने जिह्वा-
वति शंखेन चक्रं धरद्विशालभुजं पंकजनेत्रं गातुं भो
जानीतास्मच्छन्दः ॥ १४ ॥ अहो बालशुकि
इतः परमपि निद्रासि किं दुस्सहं माह्वयत पूर्णा
निर्गच्छामि शक्तोपि चमत्कारोक्तौ पूर्वमेव त्वन्मुखं जा-
नीमः शक्तुथ यूयमेव अहमेव वा भवामि शीघ्रं निर्गच्छ
तव किमन्यदाभरणं सर्वा आगताः किमागता आ-
आगत्य गणय बलशालिहस्तिनं संहृतवन्तं शत्रूणां
शत्रुत्वनिरासकं मायिनं गातुं भो जानीतास्मच्छन्दः १५
नायकतया स्थितनन्दगोपालमंदिरपालक प्रकाशमान-
ध्वजतोरणद्वारपालक मणिकवाटयन्त्रमुद्घाटय गोपक-
न्यानामस्माकमपेक्षापरिकरे मायी मणिवर्णः पूर्वेद्युरेव
उक्तिमदात परिशुद्धा भूत्वागताः स्मः शय्यात उत्था-
नाय गातुं मुखेन प्रथमं प्रतिषेधं मा कुरु मातस्त्वं
स्निग्धस्थितकवाटमुद्घाटय भो जानीतास्मच्छन्दः ॥
॥ १६ ॥ अंबरस्यैव जलस्यैव अन्नस्यैव धर्मदानकु-



दस्मत्स्वामिन्नन्दगोपालोत्तिष्ठ लतासदृशीनां पल्लव-
भूते कुलदीपभूतेऽस्मत्स्वामिनि यशोदे जानीहि अम्ब-
रान्तरावकाशं विना वर्द्धित्वा लोकं क्रान्तवदुपरितनानां
स्वामिन्निर्निद्रमुत्तिष्ठ रक्तस्वर्णकटकपादश्रीमन्बलदेवानु-
जस्त्वं च मा स्वपतं भो जानीतास्मच्छन्दः ॥ १७ ॥
प्रवहन्मदजलगजा धावद्भुजवलयवन्नन्दगोपालस्वकीये
नीले गन्धपरिमलितकेशे द्वारमुद्घाटयागत्य सर्वत्र
कुक्कुटाह्वयन्ति भो माधवीमण्डपे अनेकवारं कोकिल-
गणाः कूजन्ति भो कन्तुकपूर्णांगुले त्वन्मातुलेयनाम
गातुं रक्ततामरसकरेण गुणपूर्णवलयेषु शब्दायमानेष्वा-
गत्य उद्घाटय सन्तुष्य भो जानीतास्मच्छन्दः ॥१८॥
स्तम्भदीपे ज्वलति दन्तपादखट्वायां मृदुतूलशयनोपरि
आरुह्य गुच्छविकस्वरपुष्पकेशनीलास्तनमुपरि निधाय
शयितविकसद्वक्षस्स्थल मुखमुद्घाटय अञ्जनविशालनेत्र
त्वन्नायकमल्पकालमपि शय्यात उत्थातुं रुणत्सि भो
अल्पकालमपि विश्लेष्टुं न क्षमसि तत्तव न न्याय्यं
भो जानीतास्मच्छन्दः ॥ १९ ॥ त्रयस्त्रिंशदमराणां
प्रथमं गत्वा कंपं निवसयद्बलिष्ठ निद्रात उत्तिष्ठार्जववज्र
शक्तिमञ्छत्रूणामौष्ण्यप्रद विमल निद्रात उत्तिष्ठ कल-
शोपममृदुलस्तनरक्ताधरसूक्ष्ममध्ये नीले पूर्णे श्रीर्निद्रात
उत्तिष्ठ व्यजनं दर्पणं च दत्त्वा त्वन्नायकस्येदानीमेवा-
स्माकमवगाहनं कारय भो जानीतास्मच्छन्दः ॥ २० ॥

अभिमुखीकृतकलशेषु संमुखं वर्द्धित्वोपरि वहन-
योग्यं विरतिं विना दुग्धस्राव्युदारमहागा अधिकं
प्राप्तवतः पुत्र जागृहि दार्ढ्यवन्महन् लोके दृश्यमान-
तया स्थिततेजो निद्रात उत्तिष्ठ शत्रवस्तव बलहानिं
प्राप्य त्वद्द्वारदेशे आर्त्यागत्य त्वच्चरणावाश्रयन्ते यथा-
शास्य वयमागताः स्मः स्तुत्वा भो जानीतास्मच्छन्दः
॥२१॥ सुन्दरस्थानमहापृथ्वीराजानो अभिमानभङ्ग-
वन्तो भूत्वाऽऽगत्य तव शयनखट्वाया अधः संघशः
स्थिता इवागत्य प्रविष्टाः स्मः केसरसुखतामरसपुष्पव-
द्रक्ताक्षः स्तोकस्तोकमस्मदुपरि न कटाक्षयेत्किं चन्द्रा-
दित्यश्च उदित इव सुन्दरनयनाभ्यामुभाभ्यामस्माकमु-
परि कटाक्षयसि अस्माकमुपरि शापो यथा निवर्त्तेत
भो जानीतास्मच्छन्दः ॥ २२ ॥ वर्षाकाले शैलगुहायां
स्थिरं शयित्वा निद्राणः श्रीमत्सिंहः प्रबोधं प्राप्याग्नि-
दृष्टिं कृत्वा परिमलवद्रोमाञ्चस्सर्वपार्श्वेषु सञ्चारं कृत्वा
विधूय आलस्यं निवर्त्य गर्जित्वा निर्गत्यागच्छन्निव
त्वमतसीकुसुमवर्ण त्वन्मन्दिरादत्रागत्याऽनुगृह्य विचि-
त्रसन्निवेशवच्छ्रीमत्सिंहासने स्थित्वाऽस्मदागमनकार्यं
विचार्यानुगृहाण भो जानीतास्मच्छन्दः ॥ २३ ॥
तदेतल्लोकं क्रान्तवंश्चरणयोर्मंगलं गत्वा तत्र दक्षिण-
लंकां नाशितवञ्छक्तेर्मंगलं विनाशाय शकटं पादेन
ताडितवन् कीर्त्तेर्मंगलं वत्सं यष्टीकृत्य प्रक्षिप्तवन्



कटकयोर्मंगलं पर्वतं च्छत्रीकृत्य उद्धृतवन्गुणस्य मंगलं
जित्वा विरोधं निवर्त्तितवन् त्वद्धस्तकुन्तस्य मंगल-
मित्येवं शौर्यमेवाशास्य परिकरमादातुम् अद्य वयमाग-
च्छामः कृपां कुरु भो जानीतास्मच्छन्दः ॥ २४ ॥
एकस्याः पुत्रतयावतीर्यैकरात्रावेकस्याः पुत्रतया विलीय
वर्द्धमाने धर्त्तुमशक्यतया स्वयं द्वेषं चिन्तितवद्धृदयं
विनाश्य कंसस्योदरेऽग्नितया स्थितदीर्घव्यामोहवं-
स्त्वामर्थित्वागताः स्मः परिकरं ददासि चेच्छ्रिय अनु-
रूपसम्पदं शौर्यं च वयं गीत्वा क्लेशं च विहाय सन्तुष्य
व्रतं पूरयामो भो जानीतास्मच्छन्दः ॥ २५ ॥ व्यामोह-
माणिवर्ण मार्गशीर्षावगाहनाय श्रेष्ठानां कृत्यान्यपेक्षि-
तानि शृणोषि चेद्भूमिं सर्वां कम्पयच्छब्दायमानदुग्धो-
पमवर्ण त्वत्पाञ्चजन्यसदृशशंखान्महत्त्ववतोऽतीव महा-
पटहं मंगलं गायतस्सुन्दरदीपं ध्वजं वितानं वटदल-
शायिन्ननुगृहाण भो जानीतास्मच्छन्दः ॥ २६ ॥ अस-
ङ्गताजयद्गुण गोविन्द त्वदात्मानं गीत्वा परिकरमादा-
यास्माभिः प्राप्तव्यं सम्मानं लोकस्तूयमानप्रकारेण
समीचीनतया वलयमंगदं कर्णिकां कर्णकुसुमं नूपुरमित्ये-
तादृशं सकलाभरणं वयं धरेम वस्त्रं परिदधीम तदनन्तरं
क्षीरान्नमाच्छादयति घृतेऽर्पिते प्रकोष्ठमार्गेण प्रवहति
मिलित्वाऽवस्थाय शीतलीभूय भो जानीतास्मच्छन्दः॥
॥ २७ ॥ धेनूनां पश्चाद्गत्वा वनं प्राप्य भुञ्ज्महि ज्ञानेन

किञ्चिदपि हीनगोपकुले तव जन्म प्राप्त्यनुगुणपुण्येन वयं युक्ता न्यूनतया किंचिदपि विहीन गोविन्द त्वया सह सम्बन्धस्त्वस्माकमत्र निवर्त्तते न निवर्त्ततेऽज्ञाभिर्बालाभिरस्माभिः प्रीत्या तवाल्पनामाह्वानेऽपि कृते कोपं मा कुरु स्वामिंस्त्वं देहि परिकरं भो जानीतास्मच्छन्दः ॥ २८ ॥ अतीव प्रथमप्रभाते आगत्य त्वां सेवित्वा तव स्पृहणीयतामरसचरणयोरेवाशासनफलं शृणु गोसमूहं चारयित्वा भुञ्जानकुले अवतीर्य त्वमंतरंगवृत्तिमस्माकमस्वीकृत्य मा गमोऽमुम्परिकरमादातुं न भो गोविन्द सर्वत्र सप्तसप्तजन्मस्वपि तव बन्धवो भवेम तवैव वयं दास्यं कुर्मोऽन्यदस्मत्कामं निवर्त्तय भो जानीतास्मच्छन्दः ॥ २९ ॥ नावुदधिं मथितवन्तं माधवं केशवं चन्द्रश्रीमुखोज्ज्वलाभरणानां गत्वा प्रसाद्य तत्र तत्परिकरस्वीकारप्रकारे धन्विनव्याछविमत्कमलशीतलमालब्राह्मणोपकारकगोदोक्तं संघद्राविडमालात्रिंशदपि भ्रशं विनाऽत्रैवं प्रकारेणाऽभ्यस्यन्त उभयद्विमहापर्वतभुजरक्ताक्ष श्रीसुखसम्पन्नश्रियःपत्या सर्वत्र श्रीकृपां प्राप्यानंदनिर्भरा भवेयुर्भो जानीतास्मच्छन्दः ॥ ३० ॥

इति श्रीगोदादेवीकृतिषु श्रीव्रतं ( तिरुप्पावै ) समाप्तम् ।

---

श्रीमते रामानुजाय नमः ।



श्रीरंगेशो वृषाद्रीशो वरदो यदुशैलराट् ।
पौष्यः शिष्यो गुरुः पुत्रो यस्य तं गुरुमाश्रये

श्रीमते रामानुजाय नमः ।

## श्रीरामानुजनूत्तंदादितनयन् कारिकाः ।



प्राग्जन्मार्जितकर्मणोपहतये वंशाख्यसत्संततौ
जातस्यामृतदेशिकस्य कनकश्रीमत्पदाब्जद्वयम् ।
सुश्लिष्टं कृतवानहं मम शिरस्यभ्यर्हितं भूषणं
याम्यस्थाननिवासिनामृणमतः किंवा निवर्त्यं मया १

सर्वात्मादरणीयकृत्स्नसुमहानंदा निरर्था इति ज्ञात्वा स्वीयपदाश्रितेषु जयकृत्कीर्तैर्यतिक्ष्माभृतः । भक्त्या पादयुगे महागुणवता रंगामृतेनोदितां सद्वृत्तां पठितुं रुचिं कुरु कलामंतादिरूपां मनः ॥ २ ॥ आदायोक्तिततीस्त्वदीयचरणाम्भोजद्वये संततं सुस्निग्धैः कृतदासकर्मभिरतिस्तुत्यानि नामानि ते । जिह्वान्तर्मम लक्ष्मणार्यकृपया सिक्तानि नक्तं दिवं कुर्याः षण्मतभंजन प्रभविता विज्ञप्तिरेषा मम ॥ ३ ॥ श्रीरंगामृतदेशिकेन रचितां श्रीलक्ष्मणार्यस्तुतिं तत्कल्याणगुणाभिवर्द्धनलसद्वर्णां श्रुतिं द्राविडीम् । तद्गाथागणनासमानगणनैश्शार्दूलविक्रीडितश्लोकैर्व्यांकुरुते मुदे सुमनसां श्रीश्रीनिवासः सुधीः ॥ ४ ॥

अब्जस्थाय्यबलाढ्यहृद्धरिगुणप्रोत्साहिगाथारत-
श्रीमत्कारितनूभवाङ्घ्रिविनतिं प्राप्यात्मसत्ताजुषः।
नानातन्त्रविदां सुनिश्चयकृते प्राप्तस्य योगीशितुः
पादाब्जं हृदवाप्य जीवितुमदो नामानि वक्ष्यामहे ॥१॥
माध्वीपूर्णसमामृतोपवनकश्रीरंगपृथ्वीपतेरब्जांघ्रिं हृदये
दधत्कुमनुजान्हित्वा कलिध्वंसिनः। पादे निश्चल-
भक्तिकस्य यमिनां पत्युस्सुशीलाद्दते चित्तं मे न
विगाहतेऽन्यदिह नो जाने महत्कारणम् ॥ २ ॥ श्रीम-
त्त्वां हृदयानतः कुजनिमहुष्टैस्समं संगतिं संत्यज्यानुप-
मानशोभनगुणे शास्त्रार्थसंवेदिनि। योगीन्द्रे सहजार्जवे
कृतशुभप्रेमाभिधानार्थवत्सूरीणां शुभपादपद्मतलयो
संप्रापणेनैव मे ॥ ३ ॥ मेदिन्यामपदार्थभूतमपि
मां कृत्वैकमर्थं भृशं प्राचीनान्यपि दुष्कृतान्यमतिजा-
न्युन्मूल्य भाष्यादिना। श्रीनेता जगतां निदानमिति
सुव्यक्तं वदन्योगिराट्पादौ मच्छिरसि न्यधाच्च परमौ न
न्यूनता कापि मे ॥ ४ ॥ अस्मत्प्राप्तधनं यतीडिति न
संमन्स्यात्मदोषैर्युता निन्देयुर्मनुजा यदि स्तुतिरियं
तत्सद्गुणज्ञेहिनः। तन्नामप्रचुरास्मदीयकवितासंचस्य
दोषान्बहून्द्रष्टुं भक्तिबलात्कृतस्तुतिरसौ जातेति नैव
क्षमाः ॥ ५ ॥ शब्दार्थौ मिलितौ निबध्य कविभिः
प्रेम्णा विमुग्धात्मभिः स्तुत्यं लक्ष्मणदेशिकं परिगदद्भा-



थास्त्वभक्तेन मे। पापिष्ठेन हृदा तदीयसुमहाकीर्त्ति प्रव-
क्तुर्मम प्रज्ञाया रहितस्वतोऽहमधुना जातो महोत्साह-
वान् ॥ ६ ॥ वाचातीतमहागुणस्य मदकृद्दर्तत्रयालं-
बिनः कूरेशस्य पदाश्रयादनु महापापौघविध्वंसिनः।
श्रीरामानुजदेशिकस्य सुगुणानुक्त्वा कुमार्गानितः सद्य-
स्संतरितुं न कोपि हि ममायासो दरीदृश्यते ॥ ७ ॥ पी-
डाकारिबहिर्गतार्थविषयाज्ञानान्धकारच्छिदा मत्कासा-
रमुनीश्वरेण निगमान्तार्थान्सुभाषागिरः। एकी-
कृत्य महाप्रबन्धकपटाद्दीपं तदा दीपितं स्वस्यान्ते विद-
धन्महाविभववान्रामानुजो मद्गुरुः ॥ ८ ॥ रामालोक-
नहेतुमानसतमोनाशाय बुद्ध्याख्यसद्दीपं भूतमुनेः प्रका-
शितवतः पादौ सदा मानसे। संभर्तुर्यतिनायकस्य
सुगुणस्तोत्रोज्ज्वलाः साधवो वेदान्तान्परिरक्ष्य भुव्य-
लमहोऽमीषां प्रतिष्ठापकाः ॥ ९ ॥ गाढाज्ञानतमोहर्ता
सह मया कृष्णस्थले बल्लवं दृष्ट्वा तद्द्रमिडप्रबन्ध-
मुखतो कर्त्तुर्महायोगिनः। रम्यांघ्रिस्तुतिकृद्यतिक्षिति-
पतिप्रावण्यभूषाजुषां पादाम्भोजशिरोविभूषणधृतिश्श्री-
काः स्थिरश्रीयुताः ॥ १० ॥ श्रीमद्वेदचतुष्टयार्थगदि-
तृश्रीद्राविडाम्नायकृद्भूमिस्थास्तुसुकीर्त्तिपाणमुनिपत्प-
द्मोल्लसन्मस्तकम्। श्रीरामानुजदेशिकं प्रणमतां श्रीम-
द्गुरूणां क्रियामाहात्म्यं न मया समुद्रवसनामध्ये क्षमं

भाषितुम् ॥ ११ ॥ क्षोणीव्याप्तयशोजुषो वक्षुमती-
सारेशितुस्संहृतश्रीपादाब्जनिवासिहृद्यतिपतेः श्रीरम्य-
पादौ सदा । स्वाभाव्यानुगुणौ विचिन्त्य विनति-
श्रीकान्मुनींद्रान्विना प्रेमाऽनाचरतां परं दृढधियां
दासस्य भक्तैः क्रिया ॥ १२ ॥ मालां श्रीतुलसीकृतां
द्रमिडवाग्बद्धागमाख्यस्रजं स्थेयस्सद्गुणरंगराजपदयो-
र्दातुर्मुनिक्ष्मापतेः । पादाब्जादितरत्र भक्तिरहितस्वा-
न्तस्य सत्यात्मनः श्रीरामानुजदेशिकस्य चरणौ प्राप्यौ
विशिष्यैव मे ॥ १३ ॥ सन्त्वर्याद्य फलाप्तये खरवना-
गाब्धिष्वशेषेष्वपि क्वाथोत्पादितपःक्रियाविरचनस्वा-
भाव्यहीनोऽभवम् । यत्स्याच्छ्रीकुलशेखरोदितकला-
गाने रतानां सतां पादस्तोत्रपरः परो यतिपतिस्त्यक्तुं
न मां मन्यते ॥ १४ ॥ पूर्णप्रेमभरेण सर्वजगतीसंरक्षके
श्रीपतौ रक्ष्यत्वं परिकल्प्य मंगलकृतोर्योगीशितुः
पादयोः । संसक्तस्वमनो यतीन्द्रसुगुणांस्त्यक्त्वा स्थिता-
न्मानवान्सेवे नाहमितः परं प्रभविता का वा मम न्यून-
ता॥१५॥ वेदान्दोषविनाकृतान्कुमतिसंक्षुब्धांस्तु कृत्वा
कलौ शास्त्यात्मबलेन भूमिमखिलामेत्याविता पश्यत।
श्रीरंगेशशिरोधृतेरनुगुणां धृत्वा ददन्त्या स्रजं गोदायाः
कृपयैधितः सहजया दाता यतीन्द्रो मुनिः ॥ १६ ॥
निर्विण्णा न भवन्त्यहंप्रथमिकां प्राप्यागतेष्वप्यकेष्वा-



वृण्वत्सु सुखेषु हन्त विवशं कुर्वन्ति शास्त्रस्तुते । भक्तोऽसौ
मदहस्तिनि द्रमिडवाग्बद्धुः कलिध्वंसिनो लोकेस्मिन्प्र-
णयास्पदं यतिपतिं मन्नाथमेत्य श्रिताः ॥१७॥ अध्येतुं
कठिनाः श्रुतीर्दशशतं गाथाः सुभाषागिरः कर्त्तुं भुव्यव-
तीर्णमात्महृदये भर्तुः शठद्वेषिणम् । माधुर्योज्ज्वलवा-
न्मुनेः शुभगुणा उज्जीवनार्थं वदन्सर्वेषां च शरीरिणां
यतिपतिः श्लाघ्यः सहायो मम ॥ १८ ॥ बंधुः श्रीर्महती
पिता च जननी श्रेयान्गुरुः पद्मजाकान्तः कारिसुतप्र-
काशितगुणान्वक्ता क्रमाद्द्रामिडः । वेदः केवलमित्यतः
पृथुमहीभाजां प्रदातुं मतिं स्थाता लक्ष्मणदेशिको
विजयते मद्भोग्यभूतो भृशम् ॥१९॥ श्रीखण्डोपवनाभि-
रामकुरुकानाथामृतास्योद्भवश्रीमद्द्राविडवेदगानरसिक-
प्रीत्या पदानां गुणान् । स्तुस्त्वोज्जीवनशीलमाप्तमधिकं
नाथं हृदा संश्रयञ्छ्रीरामानुजदेशिको मम निधिः
पूर्णोंपि जेजीयते ॥ २० ॥ मूर्खाणां प्रतिहारभूमिमुपय-
न्वर्षन्निधिर्वारिद त्वं राजन्निति संस्तुतिं विरचयन्नाहं
चरेयं क्षितौ । शुद्धाचारयतीन्द्रयामुनमुनेः सुश्लिष्टपा-
दाभिधप्राप्यं लक्ष्मणदेशिकोऽधिगतवान्मामद्य रक्ष-
त्यतः ॥ २१ ॥ षडङ्क्रे द्विरदानने हुतवहे त्र्यक्षेऽर्विकायां
ज्वरे दिक्षु प्राप्तपलायनेषु भगवंस्त्रैलोक्यहेतो विभो ।
त्रायस्वेति ब्रुवत्सु बाणरचितं क्षन्तारमागो हरिं स्तोता
श्रीयतिराट् समस्तविपदः संरक्षको मे निधिः ॥ २२ ॥

आपद्रक्षकमक्षयं धनमिति स्निग्धैर्भृशं सज्जनैर्निक्षिप्तं
हृदये सदा यतिपतिं भूमावसाहश्यवान् । कर्माद्यस्य
हि वाचके मनसि निक्षिप्य त्रिसंध्यं स्तवं कुर्वेऽहं तदिदं
तदीययशसः श्लाघ्यस्य किं वा भवेत् ॥२३॥ संप्राप्ताद-
तिघोरकर्मनिवहादेहेष्वनेकेष्वपि स्थित्वास्मादवसान-
वान्समभवं कालाननादीन्बहून् । अद्याऽऽलोक्य समु-
न्नतोऽनृततपःशंसन्मतस्यासते भूमावस्तमितत्वकार्य-
मलविज्ञानं यतीशाम्बुदम् ॥ २४ ॥ अम्भोदप्रतिमानु-
कंपयतिराडव्ध्यंशुकाभ्यन्तरे को वा वेद भवत्कृपोन्न-
तिमहं दुःखस्य मुख्याश्रयः । मामागत्य भवाञ्छ्रितोऽथ
भवतः श्रीमद्गुणा ह्यात्मनः सन्त्राणप्रवणा भजन्ति
नितरां मद्रोग्यतां सम्प्रति ॥ २५ ॥ आशाव्याप्तयश-
स्तर्ति यतिपतिं मत्कर्मसंज्ञं स्थिरं दोषं प्रास्य विराजमा-
नमधिकोदारं श्रिताः साधवः । यद्दोषेण युताय दुर्भव-
जुषो यद्वृत्तियुक्ताः स्थिताः तद्दोषोद्भववृत्तयः प्रियकरा
दास्ये नियुञ्जन्ति नः ॥ २६ ॥ अक्षय्याद्ग्रहणेऽपि
भासुरतरादानेपि वृद्ध्याश्रयादौदार्यात्तव मानसं मम
भवान्संप्राप्तवान्पापिनः । शुद्धप्रोज्ज्वलतावकीनयशसो
दोषं विद्यादिदं मत्वैवं हि विमुह्यति प्रशिथिलं योगि-
न्ममैकं मनः ॥ २७ ॥ चित्ते दोषजुषं विनाशितवतः
कंसं विशुद्धात्मनो मन्नाथस्य मनोज्ञमार्जवलसच्छ्रीपा-



दनीलापतेः । पादत्याग्यसतां सुदुर्लभयतिक्ष्माभृद्गु-
णौघान्विना मद्वाक्स्तौति न मुग्धमद्य कुशलं किन्नाम
यातं मम ॥ २८ ॥ सन्न्यास्यत्करुणाद्य किन्नु भविता
रम्याकृतिश्रीपुरीनेतुर्गीतिमयश्रुतिद्रमिडवाग्जातं स्व-
भक्तौ गृहे । निक्षेप्तुर्यतिनायकस्य सुगुणान्सम्यग्वि-
दां संहतीरास्माकीनविलोचनान्यविकलं हृष्ट्वाधिगंतु
सुखम् ॥ २९ ॥ प्राप्तानन्ददमुक्तिभिः किमुदितैर्निस्सं-
ख्यदुःखप्रदैर्नैकैर्वा नरकैः किमस्ति भुवने नित्ये प्रवाहा-
त्मना । स्थेयोनेकचिदीश्वरो हरिरिति स्निग्धो ब्रुवन्नि-
र्मलः श्रीरामावरजः स्वदास्यकरणे सक्ताशयं मां
व्यधात् ॥ ३० ॥ कालान्वत्सरमासवस्त्रविधया जाता-
न्बहून्हे मनः संघीभूतबहुप्रकारजनिषु प्राप्तप्रवेशा वय-
म् । अद्यातर्कितमेव हश्यभुजवन्नाथस्य हस्तीशितुः
पादद्वन्दतले निविष्टहृदयं रामानुजं संश्रिताः ॥ ३१ ॥
योग्योत्कर्षशुभक्षमाबलयशःसिद्धिश्रियः प्राप्नुयुर्दुष्टक्षु-
द्रकलिप्रपीडितमहीमागत्य कारुण्यतः । उद्धृत्यावनका-
रिणं परतपोयुक्तं मदिष्टप्रदं श्रीरामानुजदेशिकं श्रितवतो
भट्टार्यसूक्तिक्रमात् ॥ ३२ ॥ पत्रालंकृतपंकजाततनया-
नाथस्य हस्ताश्रितश्रीचक्रायुधहेतिनंदकगदाश्रीशार्ङ्गशं-
खोत्तमाः । एतत्क्षोणितलावनाय धरणीभागे जगद्रक्षक-
श्रीरामानुजदेशिकेन्द्रविधयाऽजायन्त धन्यात्मकाः ३३॥

क्षोणीं संपरिभाव्य हिंसनकरं नीचं कलिं दुर्बलीकृत्या-
प्युज्ज्वलितं न याति यमुनाभ्रातुः पुरे स्थापितम् ।
मत्पापौघविलेखपुस्तकभरं संदह्य पश्चाद्भृशं तेजि-
ष्मत्त्वमवाप लक्ष्मणमुनेः श्लाघ्या गुणानां
ततिः ॥ ३४ ॥ नान्यं देवमहंभजे न च नरानब्दोपम-
त्वोक्तितः स्तौम्युर्व्यां स्पृहणीयरंगनगरीत्युक्तौ विमुग्धा
त्मनः ॥ श्रीरामावरजस्य पद्मचरणौ नो विस्मराम्यंचितौ
क्रूरं पापमतोद्य पीडयतु मां केन प्रकारेण वा ॥ ३५ ॥
सामर्थ्यार्जितचक्रशोभितकरे सर्वात्मनाथे तदा वेदा-
म्भोनिधिमग्नमर्थमतुलं दृष्ट्वोपदेष्टर्यपि । भूमिष्ठान्भव-
दुःखसिन्धुपतितान्कृष्णोदितार्थैः स्वयं संबोध्यानुसर-
द्गुणस्य यमिनां पत्युः स्वभावो ह्ययम् ॥ ३६ ॥ क्षो-
णीव्यात्तयशःप्रकाशभगवद्रामायणाख्यानवत्प्रेमाम्भो-
निधिवासभूमियतिराट्कीर्तिं स्तुतिं कुर्वताम् । स्निग्धानां
शुभगन्धपद्मपदयोः सक्ताशयाः साधवो मच्छेषत्ववि-
लोकनोदितमुदो मां तस्य दासं व्यधुः ॥३७॥ त्वद्दास्यं
विरचय्य तावकजनासक्तं त्वमद्याकृथा मां व्यर्थं विष-
यातिसक्तमनसं पूर्वं किमर्थं व्यधाः । भाग्योत्कृष्टवचः
सदेडचयतिराट्कारुण्यरीतिर्हि ते दुर्ज्ञेयैव विलोकने
वदतु मे सूक्ष्मार्थमेतं भवान् ॥ ३८ ॥ संपत्पुत्रमहीक-
लत्रविषयव्यामोहसन्नात्मनामस्माकं हृदयान्यपूरुषकृता



रक्षा नु कुर्यात्किमु । अज्ञानान्विततीव्रदुःखनिचयं
भ्रास्य स्वकीयध्रुवश्रीमत्कीर्त्तिमतिं प्रदाय विहिता रक्षा
यतिक्ष्माभृता ॥ ३९ ॥ क्षेमोभ्यर्हितमुक्तिरर्थनिवहो
धर्मः स्वतः सुन्दरः कामश्चेत्यमुकान्गृणन्ति चतुरस्त-
त्रापि कामो हरौ । श्रेष्ठस्तस्य हि वृद्धिहेतव इमे धर्मार्थ-
मोक्षा इति प्रावोचद्बलिवैरिशीलयतिराडस्मिञ्जगत्या-
स्तले ॥ ४० ॥ मेदिन्यां प्रतियोनि जन्मबहुल प्राप्या-
स्मदीये प्रभौ श्रीनेतर्यपि चक्षुषो विषयतां प्राप्ते क्षमा
नेक्षितुम् । लोकस्थाः सफला धवे यतिपतावागत्य
जाते क्षितौ दुष्प्रापां धिषणामवाप्य भगवद्दासास्तदैवा-
भवन् ॥ ४१ ॥ अर्हद्भूषणसुंदरीस्तनगलत्प्रेमप्रकर्षो-
ल्लुठन्नश्यन्मामकजीवमेत्य धृतवानद्याब्धिकन्यापतिः ।
सर्वात्माधिपतिर्हि रंगनगरीनेतेति जल्पन्सुधीर्निर्दुष्टो
यतिराट्प्रभावकृपया सम्पूर्णया संयुतः ॥ ४२ ॥ स्यातां
भूतिमतीवचोविरचनोद्योगे सुधासम्भवेद्राचायामविल-
म्ब्य पापनिवहो धावेत्समूलक्षयम् । भूस्था वः प्रवदा-
म्यहं वृषरिपुस्थेयः कलिध्वंसकश्रीमाहात्म्यसमेधितो
यतिकुलत्रातेति सञ्जल्पतः ॥ ४३ ॥ सूक्त्यापूर्णविल-
क्षणत्रिविधतारम्यं वचो द्राविडं वेदानाञ्च चतुष्टयं
निरवधीन्धर्मस्य मार्गानपि । सर्वाञ्ज्ञातवतोऽप्यसंख्य-
गुणवत्संकीर्त्य योगीशितुर्नामान्यादरतो वदन्ति न कुगा
इच्छन्ति कोऽर्थस्त्विति ॥ ४४ ॥ न प्राप्यं किमपि

त्वदीयचरणादन्यत्र तत्प्रापणे किञ्चित्साधनमन्यदस्ति चरणात्तस्मादृतेऽर्थं त्विमम् । इत्थं ज्ञातवतां ममापि च भवद्दानप्रयुक्तार्जवं नो वाचा विदितुं क्षमं यतिपते तत्त्वे निरूप्ये सति ॥ ४५ ॥ उक्त्येकार्थकषन्मतप्रमथनायोर्वीतले सूनुना कारेर्द्रामिडभाषया विरचितां प्रत्यक्षयन्तं श्रुतिम् । अज्ञस्यापि ममार्थनिर्णयकृते प्राप्तं मनो मामकं सर्वाशाप्रविसृत्वरामितगुणं प्राप्ता यतीशं वयम् ॥४६॥ संप्राप्यः परमः पतिस्त्रिजगतां श्रीरंगपृथ्वीडिति क्षोण्यां धर्ममुदीरयन्परिवृढो रामानुजो मत्कृतिम् । पापौघं विनिवार्य रात्रिदिवसाभेदेन मन्मानसे पूर्णो निष्प्रतिमां स्थितिं समकरोन्नातः समः कोपि मे ॥ ४७ ॥ नीचत्वस्य ममोपमाविरहिणस्त्वत्कानुकंपां विना नान्यद्रक्षकमस्ति तावककृपापात्रं तदेवाभवत् । निर्दोषस्तवनीयवैभवयतिक्षोणीश्वरेतः परं व्यर्थं नौ विरहे निदानमिह किं सिद्धे फलेऽपि द्वयोः ॥ ४८ ॥ ऋज्वी धर्मसृतिर्बभूव वितथा षड्दर्शनीनाशगा नष्टो दुष्टकलिर्मनोज्ञजलरुण्माध्वापगाश्चद्भुवः । श्रीरंगस्य विभोः पदे स्वशिरसि न्यस्य स्वयं तद्धृते श्रीमत्संयमिसार्वभौम इह भूभागेऽवतीर्णे सति ॥ ४९ ॥ भासेते महतां मनस्सु विमलस्वान्तेषु भित्त्वास्पदं सञ्चारं कुरुतः



सम्यद्धबलवद्दोपाढ्यमहुर्गिराम् । छन्दःसन्ततिमात्मभूषणतया संदद्धतुर्व्यापकप्राचीनाम्यगुणस्य लक्ष्मणमुनेः पादौ यतिक्ष्माभृतः ॥ ५० ॥ पादालम्बनमत्तपाण्डवकृते युद्धे कुरूणां तदा शत्रुच्छेदकृते रथं हययुतं दीर्घं नयन्तं पतिम् । सर्वं ज्ञातवतां तमाश्रितवतां भोग्यस्य योगीशतुर्भूमावेत्य जनिर्ममावनकृते नान्यार्थमालोचने ॥ ५१ ॥ अद्राक्षीन्समयान्षडाहितभयास्तेस्युर्यथा गामिमां सर्वाञ्छादितवान्स्वकीययशसा मय्येत्य दुष्टे स्वयम् ॥ दुष्प्रापान्यवधीन्निहत्य विलसत्पादद्वयेनेशितुः श्रीरङ्गस्य समायुजद्यतिपतेश्चर्या विचित्रा इमाः ॥ ५२ ॥ आश्चर्यास्पदमार्जवैकनिलयो रामानुजार्यो मम त्राणायाऽऽगतकल्पको बुधजनैः काम्यस्य शीलोज्ज्वलः । दुर्ज्ञेयामितचेतना बहुविधा लोकाः समस्ता हरेः शेषा इत्यभिरूपमर्थमिह भुव्यागत्य चास्थापयत् ॥५३॥ युक्तिस्थापितदुर्मतानि विलयं यातानि सर्वेश्वरं सर्वत्र प्रतिपादयच्छ्रुतिकुलं संप्राप गर्वं भृशम् । रम्यश्रीकुरुकावदान्यसुहृदंघ्र्यर्थप्रद्रामिडत्रैय्यापश्रियमात्तशीलयतिराण्माहात्म्यमीक्ष्यावनौ ॥ ५४ ॥ पश्यच्चित्तहृदात्तसौरभवनश्रीरम्यरङ्गेशितुर्भक्तश्लाघनभाजनं यतिपतिं निस्संख्यतामीयुषाम् । वेदानां स्वरशालिनां भुवि सुखावासप्रदाम्भोधरं श्रीत्या

प्रूजनकृत्कुलं भवति नः स्वामित्वशीलं कुलम् ॥ ५५ ॥
प्राप्तक्षत्रकुलान्नृपान्परशुना त्रिःसप्तकृत्वो भृशं घ्नंतं
तीक्ष्णतरेण राममनिशं स्तोतुर्विशुद्धात्मनः । क्षोणी-
व्याप्तयशस्ततेर्यतिपतेः पादाश्रयानन्तरं वाचा मे
न परं वदेन्मम मनो नेतश्च किञ्चित्स्मरेत् ॥ ५६ ॥
अन्यत्प्राप्यमुपेक्ष्य रंगकमितुर्भोग्यांघ्रिदास्ये रता-
न्बन्धूनात्मन आचरन्तमखिलश्रेष्ठं प्रपन्नेडितम् ।
श्रीमल्लक्ष्मणयोगिवर्यमिह भूगागे प्रपन्नोस्म्यहं तत्प्राप्ते-
रुनु नान्यदेशिकमपि चाज्ञानं समालोकये ॥ ५७ ॥
अज्ञैर्वेदशिरोर्थ एष इति हि ज्ञात्वा परं ब्रह्म तद्व्या-
वृत्तं निखिलादिति श्रुतिगिरा चोक्ता तदन्ये चितः ।
तद्ब्रह्मेति विहाय कायमथ ते संप्राप्नुवन्त्येकतां तेनैवेति
तदुक्तमर्थमजयद्वादे यतीद् सत्यधीः ॥ ५८ ॥ अब्धि-
व्याप्तदिशाष्टकं कलितमस्यावृत्त्य संजृंभिते काले
लक्ष्मणसूरिरुत्तमचतुर्वेदत्विषा तत्तमः । न प्रास्येद्यदि
सर्वचेतनपतिर्नारायणः स्यादिति ज्ञातुं नैव हि शक्नु-
वन्ति मनुजा ध्यात्वा प्रकारित्वतः ॥ ५९ ॥ ज्ञात-
व्यार्थयथार्थधीकनिवहैः सर्वत्र कार्यात्मजप्रोक्तद्रामिड-
वेदगंधिसुखकृद्गीताढचधामस्वपि । पश्चाच्छ्लिष्टसुहृद्धारि-
श्रितगृहेष्विष्टचा प्रविश्य स्थितो दाता दिव्यगुणो-
ज्ज्वलो यतिपतिर्मद्वंशसत्पल्लवः ॥ ६० ॥ संवृद्धोद्गति-



विस्मृतैः खरदृढैर्दुष्कर्मभिः संस्कृतौ दुर्गत्या विनि-
मग्नमेत्य कृपया दासं विधायापि माम् । कृच्छ्रप्राप्यमु-
नीन्द्रसेव्यसुतपोमत्स्वामियोगीशितुः संदीप्ताः सुगुणा-
स्ततश्च वितता भूः प्राप चित्रं शुभम् ॥ ६१ ॥ आसे
दुष्कृतपुण्यरूपमुभयं पाशं विमुच्याधुना दुःखं नाल्प-
मपि व्रजाम्यहमितो मत्स्वामियोगीशितुः । सुश्लिष्टा-
खिलपूज्यभोग्यचरणायोगस्वभावाऽसतां अल्पेनाप्य-
नुकूलताविधुरसत्स्तोत्रार्थपादाश्रयात ॥ ६२ ॥
दन्तीन्द्रोऽनुसरेद्वशां प्रणयतो यद्वत्तथा तावकश्रीमल्ल-
क्ष्मणपादयोरनुसृतिं कुर्यां यथाहं तथा । संसिद्धिं दिश
बाह्यषण्मतवनानुस्यूतदुर्बुद्धयो भग्ना यान्ति यथा तथेन्य
वशयद्भूस्थान्यतीड् धीनिधिः ॥ ६३ ॥ नानोद्गासिश-
ठारिरम्यफणिते गानोत्थितानन्दधौ प्रच्योतन्मधुरू-
पतः प्रविशते मद्योगिराजद्विपः । सत्योदश्चितमान्यवेद-
सुमहादण्डं प्रगृह्य क्षितावभ्येत्य प्रहणोन्मुखः कुकथका
जाता भवच्छ्रीर्गता ॥ ६४ ॥ श्रीर्नष्टादिकुवादिनां
श्रुतिविदां दैन्यं गतं सर्वथा भूः प्रापातिशयं गतश्च विश-
यस्तत्त्वार्थशास्त्रावलेः । दोषा दुर्गुणिनां गताश्च विलयं
सर्वे मम स्वामिना श्रीरामानुजदेशिकेन सुधिया कारु-
ण्यतां दत्तया ॥ ६५ ॥ प्राप्य ज्ञानविपाकरूपपरमप्रेमा-
नुघस्रं त्वरां संप्राप्ये समुपेयुषां भगवतो मोक्षस्य वि-

श्राणनम् । कूरांहःपदमन्मनोदुरितहृद्रामानुजार्यस्य त-
द्दानं स्वं भजतां स्वकीयकरुणां दत्त्वा परं साधनम् ॥
॥ ६६ ॥ पादैकाश्रयधर्मनन्दनकृते पूर्वं शतं कौरवा-
न्नाशं प्रापितवान्हरिः समसृजत्स्वात्मानमासेवितुम् ।
खानीमानि न सौख्यदानि व इति व्याहृत्य योगी
तदा रक्षां कल्पितवान्न चेत्तनुभृतां कोऽन्यो भवेद्रक्षकः ॥
॥ ६७ ॥ को वा मे सदृशोऽधुना निगदने पार्थस्य दिव्ये
रथे गीतायां स्वरसं शुभार्थमुदितं कृष्णेन तर्हि स्फुटम् ।
भूमौ भाषितवन्तमानतवतां रामानुजार्यं सतां ध्यात्वा
सद्गुणसन्ततौ प्रवणतां यातं ममात्मा च हृत् ॥ ६८ ॥
प्राक्स्वान्तेन सहाखिलानि करणान्याप्त्वा विशीर्णात्मता
नाशं प्राप्य विलीनतामुपययुर्मूलप्रकृत्यां तदा । दृष्ट्वा
तानि ददौ तु मे न कृपया रंगी ददौ स्वं पदं तद्दत्त्वा
स्वयमेत्य मज्जनयिता योगीड् दधाराद्य माम् ॥ ६९ ॥
मां हीनं समवेक्ष्य वृत्तमपि मे दृष्ट्वाप्यसंख्यैर्गुणैर्जुष्टं त्वां
च निरीक्षसे यदि कृपासन्धानमेवोचितम् । नो चेन्म-
य्यवलोक्यते यदि पुनः कश्चिद्गुणः संभवेत्पश्येयुः
किमिति त्वद्वृद्धकरुणां योगीन्द्र तेऽभ्याश्रिताः॥ ७० ॥
चित्तं लग्नमभूत्त्वदीयपदयोः सुश्लिष्टयोर्मामकं तत्पं-
केरुहपादयोः समधिका प्रीतिस्त्वभून्मामिका । वृत्ति-
स्त्वद्गुणमात्रपर्यवसिता पूर्वं कृतं दुष्कृतं त्वत्कार्येण
विनाशितं यतिपते मन्नाथ दातर्महन् ॥ ७१ ॥



प्रास्यन्नीचमनस्थितान्कलहिनः शुद्धां श्रुतेर्वर्तिनीं भूमौ
स्थापितवानिति स्वहृदये ध्यात्वा कृतप्रेमिभिः । प्रेम्णा
साकमुरुस्तवैर्बहुगुणैः सार्थं सुगण्यं व्यधान्मां रामानुज-
देशिको निरवधिस्वोदारतां ख्यापयन् ॥ ७२ ॥ औदा-
र्यात्स्वमहाकृपाविभवतः शैत्यात्सुधांशोः समादेतद्भू-
तलवासिनां शरणतां प्राप्तस्य दातुः स्वयम् । सत्यक्षे-
मधियो यतिक्षितिपतेर्द्धर्यातृत्वदार्ढ्यं विना भिन्ना न
स्थितिरस्ति काचिदपि मे सम्यग्विचारे सति ॥ ७३ ॥
नो जानन्ति यथार्थनैगमवचोरीतिं त्विति श्रीपतिस्ती-
क्ष्णाग्रेण सुदर्शनेन कुरुते छेदं सुदुष्टात्मनाम् ।
जीमूतोपमदातृभावमहितो राजद्गुणो मत्पतिर्योगीट्
तच्छुभवेदरीतिगलितान्वृंक्ते तदैकोक्तितः ॥ ७४ ॥
यत्केदारतटीषु शंखनिवहाः सूते सुमुक्ताफलं तच्छ्रीरंग-
पतौ करेऽरिजलजौ धृत्वा समक्षं मम । सत्यं त्वां न
परित्यजाम्यहमिति स्थातर्यपि त्वद्गुणा व्याकर्षन्ति परं
समेत्य यतिराडावृत्त्य माञ्च स्थिताः ॥ ७५ ॥ स्थास्नु
प्रोज्ज्वलकीर्तिदीर्घसरसीयुग्वेङ्कटश्रीगिरिर्वैकुण्ठाभिध-
लोकराट्स्तुतपयःपाथोनिधिश्चापि ते । आनन्दं हि कि-
यन्तमावहति ते सुश्लिष्टभोग्ये पदे तन्मे दत्त इमे ददस्व
यमिनां नेतः पुमर्थोत्तमे ॥ ७६ ॥ प्रागाश्राणितसत्कृ-

पामवितरच्छ्रुत्याविरुद्धं मतं निःसंख्यं बहुभिस्तदागमभ-
वैरर्थैर्निरस्यन्महीम् । व्याप्नोद्यः सकलामिमां स्वयशसा
पापानि मे मूलतः प्रास्यत्तस्य वदान्यलक्ष्मणमुनेः किं
वा हृदि स्यादितः ॥ ७७ ॥ स्वान्ते मे प्रसभं प्रविश्य
विलयं नीत्वा तदन्तस्थमप्यात्मस्तेयममेययत्ननिच-
यैर्मां वञ्चयित्वा भृशम् । त्वय्यस्यामवनौ विनीय
कृतवत्यब्जापतेः किङ्करं चित्ते मे न लगन्ति केचन
यतीऽन्ये मृषार्थास्ततः ॥ ७८ ॥ मिथ्यावादिकुदृष्टि-
बाह्यगदितानर्थान्निरस्य क्षितावस्यां सत्यसुरक्षके यति-
पतौ रक्षाप्रतीक्षे स्थिते । अस्मद्रक्षणशक्तमन्यदिह किं
दैवं भवेदित्यतिक्रान्ताः सत्यमतिं विहाय हि वृथा
संशेरते भूमिगाः ॥ ७९ ॥ सत्संस्तुत्य यतीन्द्रदीव्यद-
भिर्यां स्वेषामुपायत्वतो रीतिं प्रत्ययशालिनामविरतं
ध्यायन्ति ये साधवः । तेषामेव समस्तदेशसमयाव-
स्थासु दास्यक्रियां वाक्चित्तावयवैः करोमि निखिलां
विश्लेषगंधं विना ॥ ८० ॥ अन्यार्थाभिरुचिं विना
तव पदद्वंद्वैकभक्त्याश्रयप्रावण्येन विना स्थितस्य मम
च श्रीरंगपृथ्वीपतेः । विच्छेदेन विनाऽरुणांघ्रियुगलं
संदत्तवान्संप्रति श्रीयोगीन्द्रविचारणेन हि ततो श्रीम-
द्दयायाः सदृक् ॥ ८१ ॥ विज्ञानं सदसद्विवेचनचणं न



प्राप्य दुष्कर्मभिः सत्ताशून्यमतिं प्रपद्य विषये संभ्रा-
म्यमाणं सदा । मामेकक्षण एव संविरचयन्दृष्टान्तहीन-
श्रुतिं स्थाता कीदृशपुण्यवान्स्फुटयशा रामानुजस्त्वं
बुधः ॥ ८२ ॥ शान्त्यादीन्सुगुणानवाप्य परमं धर्मं
प्रपत्त्याह्वयं कृत्वा मोक्षमियाम मुख्यमिति भूव्याप्तप्र-
थाशालिनाम् । गोष्ठीस्थो न भवामि तैंघ्रियुगसन्मुक्तिं
भजेयं सुखादेषाब्दाधिकदातता तव यतीऽतद्भवान्प-
श्यतु ॥ ८३ ॥ अद्राक्षं मम शेषिणं यतिपतिं दृष्टे च
तद्दासतां प्राप्तानां स्पृणीयपादयुगले दासत्वमापं मम ।
प्रास्यं प्रत्नकठोरपापमपिवं तत्सद्गुणौघांबुधिं प्रीत्येतो-
न्यपुमर्थलाभकथने शीमा न संदृश्यते ॥ ८४ ॥ स्वा-
धीनश्रुतिहृद्गतार्थमधिकज्योतिस्तदग्रे स्थितं स्वामीति
प्रतिपत्तुमक्षमतया संभ्राम्यमाणात्मनाम् । अज्ञानक्षति-
कृद्यतिक्षितिपतेः संसेवकानां सतां पादान्यन्मम रक्षकं
न हि भवेद्यत्किञ्चिदप्यात्मनः ॥ ८५ ॥ प्राप्य क्षुद्रन-
रांस्तदाश्रिमजहंस्तानेव बन्धून्स्मरन्भ्रामं भ्राममपि
प्रधाव्य शिथिले न स्यामितोनन्तरम् । सर्वार्थप्रतिपा-
दिशास्त्रनिपुणैः स्तुत्यं यतिक्ष्मापतिं ध्यायत्स्वान्तजुषो
हि येऽपि सततं नः शेषिणस्ते बुधाः ॥ ८६ ॥ विज्ञेऽज्ञे
स्तुवतोर्द्वयोरपि गुणौचित्यान्तिजश्रीगुणस्तोमावेदक-
शब्दवाननिशमित्युत्कृष्टधीभिः सदा । विज्ञेयो उज्व-

लकीर्तिर्योगिपतिना वेदान्विदित्वाऽवनौ दत्तां श्लाघ्य-
पतिं नरानभजतः कामं कलिर्बाधते ॥ ८७ ॥ सारा-
धिक्यसुशालिवर्धकमहाक्षेत्रोल्लसच्छ्रीपुरीनेतुः शास्त्रकृ-
तोऽनुभूय च कलेर्द्धन्याढ्यगाथारिपोः । संपूर्णस्व-
मनास्ततोऽधिकबलः सिंहो यतीड्वेदवित्कुज्ञान्याख्य-
तरक्षवस्त्विह भुवीत्यद्धा यदैतत्स्तुवे ॥ ८८ ॥
स्तोतुं दुश्शकशील लक्ष्मणमुने ज्ञात्वा त्वदीयान्गुणा-
न्स्तोता स्यां यदि दोषकृत्तदकृतौ त्वत्सद्गुणानां
महान् । उत्कर्षो भवितेति मय्यतितरां तूष्णीं स्थिते
मन्मनः स्तुत्या हीनमसद्भवेत्त्वमिह किं स्मर्तेति भीतोऽ-
स्म्यहम् ॥ ८९ ॥ न ध्यायन्ति भवापहं पतिमिह
क्षोणीतले किंकरं मां कर्त्तुं स्वयमागतं यतिपतिं
तस्मिन्न बध्नन्त्यपि । काव्यं तत्प्रवितन्वतां चरणयोः
कुर्वन्ति नो मालिकां पौष्पीमज्ञतरां निमज्य मनुजाः
क्लिश्यन्त्यहो जन्मसु ॥ ९० ॥ अज्ञानाधिकशैवतन्त्र-
कथकप्रोक्ता सदर्थाभिधध्वान्ताधिक्यकृतावसानजगती-
मोहान्धकारक्षतेः । स्वीयोद्भासिकृपां प्रदाय सकल-
क्षेत्रज्ञराड्डूंगराडित्येवं विधमर्थमप्यकथयद्योगी महा-
पुण्यवान् ॥ ९१ ॥ पुण्यं न व्रतमाचरं तव पदप्राप्ते-
र्हेतुं भृशं दुष्प्रापं श्रवणं च नावदमृजुश्रौतप्रबन्धव्रजैः ।
दुर्विज्ञेयसुकीर्तिमन्यतिपते त्वं मेऽद्य चक्षुर्हृदोरन्तः



प्राप्य सुगोचरः स्थित इह ब्रूयाद्भवान्कारणम् ॥ ९२ ॥
कष्टार्थान्निगमार्थ इत्यभिदधद्दुष्टैः कृतं भ्रामकं वाक्यं
प्रास्य महोपकृत्किल महापापं समूलं मम । दृड्वैत्य
स्वकृपाख्यतैक्ष्ण्यवदसिं कृत्वा विकोशं भृशं च्छित्त्वो-
त्पादितवान्यथार्थसुतपा रामानुजार्याह्वयः ॥ ९३ ॥
दत्ते न्यासतपोनुयच्छति परां प्राप्योचितां संपदं
भक्त्याख्यामविनाश्य जन्मभवदक्रूराघमप्यस्यति ।
स्वीयानामनघो ददाति च परं धामेति योगीड् दिवं
किञ्चित्तद्गुणभिन्नमाहतियुतः प्रेम्णा न भोक्ष्याम्यहम्
॥ ९४ ॥ स्थित्वान्तः सकलात्मनामपि कृपीरुज्जीव-
नार्थाः परं कृत्वोत्कृष्टगतिं भृशं प्रविदधत्तेषां च सर्वे-
श्वरः । निःस्नेहो हि भवेद्यथाऽखिलचितां मुक्तिं प्रदा-
स्यंस्तथा व्योम्नो भुव्यवतीर्य मे यतिपतिस्तेने चतस्रः
श्रुतीः ॥ ९५ ॥ प्रोद्यद्दुःखगतप्रदुष्कृतवशादप्राप्य
धर्मेप्प्रिये विश्वासं प्रबलं कुगन्धपिशितप्रायस्य देहस्य
हि । आशैथिल्यगते भवेषु च रतो भूत्वा निपत्यापि मे
सन्त्येकस्य सुरक्षका यतिपतिं मत्स्वामिनं संश्रिताः९६॥
मत्प्राप्यांस्तु विना मदाश्रितगुणस्तोत्रस्वभावा न हि
ज्ञात्वेति स्वमवाप्य दास्यकरणे सक्तस्वभावात्मनाम् ।
सुश्लिष्टाब्जपदानवाप्य सततं दास्यं विधातुं न्यधाच्छ्री-

मँल्लक्ष्मणदेशिकः स्वकृपया मामद्य सत्ताश्रयम् ॥९७॥
मद्रामानुजदेशिकः शरणमित्युक्तौ शुभायां दिवि न्य-
स्येद्रा स्वपदे स्थितेपि निरये निक्षिप्य वा तापयेत् । ते
चोभेप्यनुगच्छदादिरहितभ्राम्यज्जनौ स्थापयेन्नो चेत-
स्ववशे त्यजेन्न शिथिलीभूया मनो मद्गतेः ॥ ९८ ॥
तर्कस्थापितदुर्मताः क्षपणका बुद्धाः पिशाचोपमाः शैवा
दीर्वजटेशसूक्तिनिपुणाः शून्यार्थवादास्तथा । अंगीः
कृत्य चतुःश्रुतीः कुमतयो नीचाश्च नाशं गताः संप्राप्ते
सति रम्यकल्पकतरौ रामानुजे भूतलम् ॥ ९९ ॥
प्राप्तो मद्धृदयाख्यरम्यमधुपस्त्वत्पादपंकेरुहप्रोद्यत्सद्गु-
णशुद्धमाक्षिकरसं पीत्वैव वस्तुं त्वयि । दातव्यं हि
तदेव लक्ष्मणमुने नैतद्विनान्यत्क्षमं भोक्तुं किञ्चिदतः
परं तदितरत्संदर्श्य नो मोहयेः ॥ १०० ॥ व्यामोहा-
वहपुण्यपापकपटैः पाशैः पिनद्धं ततो मामज्ञं परिमोह-
यज्जनिगतं दुःखं व्यपोह्यावितुम् । कुर्वन्प्रेम यतीश्वरेति
वचनं निद्धचाय ते भोग्यतां शैथिल्यं भजतां वदन्ति
सुजना दोषं सदा स्निह्यताम् ॥ १०१ ॥ ध्यात्वा ते
सुगुणान्मनः शिथिलतां धत्ते रसज्ञा च मे मत्स्वामिन्य-
तिशेखरेति सततं वक्त्येकताना सती । कूराद्यस्य करौ
मम प्रणमतो द्रष्टुं दृशौ वाञ्छतो वार्ध्यन्तावृतभूतले
मयि तवौदार्यं कथं ह्युच्छ्रितम् ॥ १०२ ॥ भूत्वा



प्रौढकठोररुड्डिसदृशः सिंहः सुरारेस्तदा सासेर्वृद्ध
सुवर्णभासुरतनुच्छेत्तुर्यशश्शालयः । यस्यैघन्त फलो-
न्मुखा हृदि यतीट्छारीरकर्मोद्भवं दुःखं मे स निवर्त्य
हस्तफलवत्प्रज्ञां दयालुर्दधौ ॥ १०३ ॥ पाणिस्था-
मलकोपमं मधुरिपौ संदर्शितेपि त्वया सौन्दर्या-
दिगुणानहं तव तनौ दीप्तान्विना नार्थये । संसारा-
ह्वयकर्दमेस्तु वसतिर्ज्योतिर्मये खे गतिः कुर्याश्चेत्त्व-
मिमां कृपां धृतिमियां योगिन्मदिष्टार्थद ॥ १०४ ॥
श्लाघ्योर्मावमृतोदधौ मधुरिपोर्निद्रावतः पादयोः प्रेह्वैर्मा-
नसमानितातिविमलज्ञानं सुवेदोज्ज्वलैः । सेव्यांघ्रि
यतिराजमाश्रितवतां हृष्टाशयानां सतामाप्लुत्योत्कट-
घोषनर्तनपदं दासस्य मे वासभूः ॥१०५॥ वैकुण्ठं वृष-
भाचलं वनगिरिं वानक्षितिं मायिनः श्रीकान्तस्य बुधा
वदन्ति सह तै[illegible]त्य व[illegible]स्थलम् । तस्य श्रीयतिराजचे-
तसि मम स्वान्तान्तरे वासभूस्तस्य स्वस्य महाप्रमोद-
भरितः संप्रत्युपेत्यादरात् ॥ १०६ ॥ प्रेमप्रापिसुशील-
लक्ष्मणमुने विज्ञप्तिरेकास्ति मे कुल्यव्यापिरुजाढ्यदे-
हनिवहे जन्मव्यथाद्यैर्मयि । संपीडय्चेप्यमितैर्व्यथास-
मुदयैः सर्वत्र मां सर्वदा त्वदासेषु विधाय सक्तमनसं
तद्दासमेवं तनु ॥ १०७ ॥ पुञ्जीभूतसमस्तभक्तिमदयि

वान्ताभिसंवृद्धया भक्त्या व्याप्तयशस्कलक्ष्मणमुनेः पादाम्बुजे सन्ततम् । अस्मन्मूर्धनि धर्तुमुज्ज्वलझषप्रस्पंदकेदारवद्रङ्गक्ष्माधिपबाहुमध्यललितां पद्मालयां संश्रये ॥ १०८ ॥

इति श्रीहरितकुलतिलकश्रीरंगगुरुचरणतनूभवेन श्रीनिवासदासेन विरचिता भगवद्रामानुजमुनिविषयश्रीरंगामृतकविविरचितद्राविडप्रबन्धसंस्कृतप्रतिपदव्याख्या श्लोकरूपा "श्रीरामानुजनूत्तंदादिकारिका"

॥ समाप्ता ॥

॥ एंबेरुमानार् तिरुवडिहळे शरणम् ॥

पुस्तक मिलनेका ठिकाना-

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बम्बई.